॥ श्रीरस्तु ॥

श्रीपराशरभट्टार्यप्रणीतम्

भगवद्गुणदर्पणाभिधानम्

# विष्णुसहस्रनामभाष्यम् ।

---

श्रीकाञ्ची प्रतिवादिभयङ्कर

अण्णङ्गराचार्येण

संमुद्र्य प्रकाशितम् ।

प्राप्तिस्थानम्—

ग्रन्थमाला आफीस काञ्चीपुरम् ।

P. B. ANNANGARACHARYA
Granthamala Office
Kancheepuram

1949

Price Rs. 2/-

॥ श्रीरस्तु ॥

श्रीपराशरभट्टार्यप्रणीतम्

भगवद्गुणदर्पणाभिधानम्

# विष्णुसहस्रनामभाष्यम् ।

---


श्रीकाञ्ची प्रतिवादिभयङ्कर

अण्णङ्गराचार्येण


संमुद्र्य प्रकाशितम् ।


प्राप्तिस्थानम्—

ग्रन्थमाला आफीस काञ्चीपुरम् ।

P. B. ANNANGARACHARYA
Granthamala Office
Kancheepuram

1949

Price Rs. 2/-

श्रीः ॥

## श्रीविष्णुसहस्रनामावल्या अकाराद्यनुक्रमणिका ॥

इति सहस्रनामावलीनामानुक्रमणिका समाप्ता ॥

## क्रय्यपुस्तकसूची ।

| | | |
|---|---|---|
| १. | श्रीमद्वेदान्तदेशिकग्रन्थमाला समग्रा समीचीन रक्षाबन्धसमेता | ४५—० |
| २. | श्रीवचनभूषणमीमांसाभाष्यम् | २—० |
| ३. | सिद्धित्रयम्—श्रीमद्यामुनाचार्यकृतिः | १—० |
| ४. | यतीन्द्रमतदीपिका | १—० |
| ५. | पूर्वाचार्य वैभवप्रकाशिका (आळ्वारादीनाम्) | २—० |
| ६. | पूर्वाचार्यप्रणीतसकलस्तोत्रमाला | २—० |
| ७. | वैदिकमनोहरापत्रिकाः | ६—० |
| ८. | श्रीवैष्णवसुधापत्रिकाः | ८—० |
| ९. | यतिराजविंशतिहिन्दीटीका | ०—१२ |
| १०. | वेदान्तवादावली | २४—० |

प्राप्तिस्थानम्—

ग्रन्थमाला आफीस

काञ्चीपुरम् ।

॥ श्रीः ॥

श्रीपराशरभट्टार्यानुगृहीतभगवद्गुणदर्पणप्रतिफलितं

# ॥ श्रीविष्णोर्दिव्यसहस्रनामस्तोत्रम् ॥

ओं शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये ॥
यस्य द्विरदवक्त्राद्याः पारिषद्याः परश्शतम् ।
विघ्नं निघ्नन्ति सततं विष्वक्सेनं तमाश्रये ॥
व्यासं वसिष्ठनप्तारं शक्तेः पौत्रमकल्मषम् ।
पराशरात्मजं वन्दे शुकतातं तपोनिधिम् ॥
व्यासाय विष्णुरूपाय व्यासरूपाय विष्णवे ।
नमो वै ब्रह्मनिधये वासिष्ठाय नमो नमः ॥
अविकाराय शुद्धाय नित्याय परमात्मने ।
सदैकरूपरूपाय विष्णवे सर्वजिष्णवे ॥
यस्य स्मरणमात्रेण जन्मसंसारबन्धनात् ।
विमुच्यते नमस्तस्मै विष्णवे प्रभविष्णवे ॥
ओं नमो विष्णवे प्रभविष्णवे ॥

श्रीवैशम्पायन उवाच—

श्रुत्वा धर्मानशेषेण पावनानि च सर्वशः ।
युधिष्ठिरः शान्तनवं पुनरेवाभ्यभाषत ॥

युधिष्ठिर उवाच—

किमेकं दैवतं लोके किं वाऽप्येकं परायणम् ।
स्तुवन्तः कं कमर्चन्तः प्राप्नुयुर्मानवाः शुभम् ॥
को धर्मः सर्वधर्माणां भवतः परमो मतः ।
किं जपन् मुच्यते जन्तुर्जन्मसंसारबन्धनात् ॥

श्रीभीष्म उवाच—

जगत्प्रभुं देवदेवमनन्तं पुरुषोत्तमम् ।
स्तुवन्नामसहस्रेण पुरुषः सततोत्थितः ॥
तमेव चार्चयन्नित्यं भक्त्या पुरुषमव्ययम् ।
ध्यायन् स्तुवन् नमस्यंश्च यजमानस्तमेव च ॥
अनादिनिधनं विष्णुं सर्वलोकमहेश्वरम् ।
लोकाध्यक्षं स्तुवन्नित्यं सर्वदुःखातिगो भवेत् ॥
ब्रह्मण्यं सर्वधर्मज्ञं लोकानां कीर्तिवर्धनम् ।
लोकनाथं महद्भूतं सर्वभूतभवोद्भवम् ॥
एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः ।
यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरः सदा ॥
परमं यो महत्तेजः परमं यो महत्तपः ।
परमं यो महद्ब्रह्म परमं यः परायणम् ॥
पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम् ।
दैवतं देवतानां च भूतानां योऽव्ययः पिता ॥
यतः सर्वाणि भूतानि भवन्त्यादियुगागमे ।
यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये ॥
तस्य लोकप्रधानस्य जगन्नाथस्य भूपते ।
विष्णोर्नामसहस्रं मे शृणु पापभयापहम् ॥
यानि नामानि गौणानि विख्यातानि महात्मनः ।
ऋषिभिः परिगीतानि तानि वक्ष्यामि भूतये ॥
विष्णोर्नामसहस्रस्य वेदव्यासो महानृषिः ।
छन्दोऽनुष्टुप् तथा देवो भगवान् देवकीसुतः ॥
अमृतांशूद्भवो बीजं शक्तिर्देवकिनन्दनः ।
त्रिसामा हृदयं तस्य शान्त्यर्थे विनियुज्यते ॥

(विष्णुं जिष्णुं महाविष्णुं प्रभविष्णुं महेश्वरम् ।
अनेकरूपदैत्यान्तं नमामि पुरुषोत्तमम् ॥)

अस्य श्रीविष्णोर्दिव्यसहस्रनामस्तोत्रमहामन्त्रस्य । श्रीवेदव्यासो भगवान् ऋषिः । अनुष्टुप् छन्दः । श्रीमहाविष्णुः परमात्मा श्रीमन्नारायणो देवता । अमृतांशूद्भवो भानुरिति बीजम् । देवकीनन्दनः स्रष्टेति शक्तिः । उद्भवः क्षोभणो देव इति परमो मन्त्रः । शङ्खभृन्नन्दकी चक्रीति कीलकम् । शार्ङ्गधन्वा गदाधर इत्यस्त्रम् । रथाङ्गपाणिरक्षोभ्य इति नेत्रम् । त्रिसामा सामगः सामेति कवचम् । आनन्दं परब्रह्मेति योनिः । ऋतुस्सुदर्शनः काल इति दिग्बन्धः । श्रीविश्वरूप इति ध्यानम् ॥ श्रीमहाविष्णुप्रसाद-सिद्ध्यर्थे श्रीसहस्रनामजपे विनियोगः ॥ ध्यानम् :—

क्षीरोदन्वत्प्रदेशे शुचिमणिविलसत्सैकते मौक्तिकानां
मालाक्लृप्तासनस्थः स्फटिकमणिनिभैर्मौक्तिकैर्मण्डिताङ्गः ।
शुभ्रैरभ्रैरदभ्रैरुपरिविरचितैर्मुक्तपीयूषवर्षैः
आनन्दी नः पुनीयादरिनलिनगदाशङ्खपाणिर्मुकुन्दः ॥

भूः पादौ यस्य नाभिर्वियदसुरनिलश्चन्द्रसूर्यौ च नेत्रे
कर्णावाशाः शिरो द्यौर्मुखमपि दहनो यस्य वास्तेयमब्धिः ।
अन्तस्स्थं यस्य विश्वं सुरनरखगगोभोगिगन्धर्वदैत्यैः
चित्रं रंरम्यते तं त्रिभुवनवपुषं विष्णुमीशं नमामि ॥

शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं
विश्वाधारं गगनसदृशं मेघवर्णं शुभाङ्गम् ।
लक्ष्मीकान्तं कमलनयनं योगिहृद्ध्यानगम्यं
वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम् ॥

मेघश्यामं पीतकौशेयवासं श्रीवत्साङ्कं कौस्तुभोद्भासिताङ्गम् ।
पुण्योपेतं पुण्डरीकायताक्षं विष्णुं वन्दे सर्वलोकैकनाथम् ॥

सशङ्खचक्रं सकिरीटकुण्डलं सपीतवस्त्रं सरसीरुहेक्षणम् ।
सहारवक्षस्स्थलशोभिकौस्तुभं नमामि विष्णुं शिरसा चतुर्भुजम् ॥

---

ओं विश्वं विष्णुर्वषट्कारो भूतभव्यभवत्प्रभुः ।
भूतकृद्भूतभृद्भावो भूतात्मा भूतभावनः ॥ १ ॥
पूतात्मा परमात्मा च मुक्तानां परमा गतिः ।
अव्ययः पुरुषः साक्षी क्षेत्रज्ञोऽक्षर एव च ॥ २ ॥
योगो योगविदां नेता प्रधानपुरुषेश्वरः ।
नारसिंहवपुः श्रीमान् केशवः पुरुषोत्तमः ॥ ३ ॥
सर्वः शर्वः शिवः स्थाणुर्भूतादिर्निधिरव्ययः ।
सम्भवो भावनो भर्ता प्रभवः प्रभुरीश्वरः ॥ ४ ॥
स्वयम्भूः शम्भुरादित्यः पुष्कराक्षो महास्वनः ।
अनादिनिधनो धाता विधाता धातुरुत्तमः ॥ ५ ॥
अप्रमेयो हृषीकेशः पद्मनाभोऽमरप्रभुः ।
विश्वकर्मा मनुस्त्वष्टा स्थविष्ठः स्थविरो ध्रुवः ॥ ६ ॥
अग्राह्यः शाश्वतः कृष्णो लोहिताक्षः प्रतर्दनः ।
प्रभूतस्त्रिककुद्धाम पवित्रं मङ्गलं परम् ॥ ७ ॥
ईशानः प्राणदः प्राणो ज्येष्ठः श्रेष्ठः प्रजापतिः ।
हिरण्यगर्भो भूगर्भो माधवो मधुसूदनः ॥ ८ ॥
ईश्वरो विक्रमी धन्वी मेधावी विक्रमः क्रमः ।
अनुत्तमो दुराधर्षः कृतज्ञः कृतिरात्मवान् ॥ ९ ॥
सुरेशः शरणं शर्म विश्वरेताः प्रजाभवः ।
अहः संवत्सरो व्यालः प्रत्ययः सर्वदर्शनः ॥ १० ॥
अजः सर्वेश्वरः सिद्धः सिद्धिः सर्वादिरच्युतः ।
वृषाकपिरमेयात्मा सर्वयोगविनिस्सृतः ॥ ११ ॥

वसुर्वसुमनाः सत्यः समात्मा सम्मितः समः ।
अमोघः पुण्डरीकाक्षो वृषकर्मा वृषाकृतिः ॥ १२ ॥
रुद्रो बहुशिरा बभ्रुर्विश्वयोनिः शुचिश्रवाः ।
अमृतः शाश्वतस्थाणुर्वरारोहो महातपाः ॥ १३ ॥
सर्वगः सर्वविद्भानुर्विष्वक्सेनो जनार्दनः ।
वेदो वेदविदव्यङ्गो वेदाङ्गो वेदवित् कविः ॥ १४ ॥
लोकाध्यक्षः सुराध्यक्षो धर्माध्यक्षः कृताकृतः ।
चतुरात्मा चतुर्व्यूहश्चतुर्दंष्ट्रश्चतुर्भुजः ॥ १५ ॥
भ्राजिष्णुर्भोजनं भोक्ता सहिष्णुर्जगदादिजः ।
अनघो विजयो जेता विश्वयोनिः पुनर्वसुः ॥ १६ ॥
उपेन्द्रो वामनः प्रांशुरमोघः शुचिरूर्जितः ।
अतीन्द्रः सङ्ग्रहः सर्गो धृतात्मा नियमो यमः ॥ १७ ॥
वेद्यो वैद्यः सदायोगी वीरहा माधवो मधुः ।
अतीन्द्रियो महामायो महोत्साहो महाबलः ॥ १८ ॥
महाबुद्धिर्महावीर्यो महाशक्तिर्महाद्युतिः ।
अनिर्देश्यवपुः श्रीमानमेयात्मा महाद्रिधृत् ॥ १९ ॥
महेष्वासो महीभर्ता श्रीनिवासः सतां गतिः ।
अनिरुद्धः सुरानन्दो गोविन्दो गोविदां पतिः ॥ २० ॥
मरीचिर्दमनो हंसः सुपर्णो भुजगोत्तमः ।
हिरण्यनाभः सुतपाः पद्मनाभः प्रजापतिः ॥ २१ ॥
अमृत्युः सर्वदृक् सिंहः संधाता सन्धिमान् स्थिरः ।
अजो दुर्मर्षणः शास्ता विश्रुतात्मा सुरारिहा ॥ २२ ॥
गुरुर्गुरुतमो धाम सत्यः सत्यपराक्रमः ।
निमिषोऽनिमिषः स्रग्वी वाचस्पतिरुदारधीः ॥ २३ ॥
अग्रणीर्ग्रामणीः श्रीमान् न्यायो नेता समीरणः ।

सहस्रमूर्द्धा विश्वात्मा सहस्राक्षः सहस्रपात् ॥ २४ ॥
आवर्तनो निवृत्तात्मा संवृतः संप्रमर्दनः ।
अहस्संवर्तको वह्निरनिलो धरणीधरः ॥ २५ ॥
सुप्रसादः प्रसन्नात्मा विश्वसृग्विश्वभुग्विभुः ।
सत्कर्ता सत्कृतः साधुर्जह्नुर्नारायणो नरः ॥ २६ ॥
असंख्येयोऽप्रमेयात्मा विशिष्टः शिष्टकृच्छुचिः ।
सिद्धार्थः सिद्धसङ्कल्पः सिद्धिदः सिद्धिसाधनः ॥ २७ ॥
वृषाही वृषभो विष्णुर्वृषपर्वा वृषोदरः ।
वर्द्धनो वर्धमानश्च विविक्तः श्रुतिसागरः ॥ २८ ॥
सुभुजो दुर्धरो वाग्मी महेन्द्रो वसुदो वसुः ।
नैकरूपो बृहद्रूपः शिपिविष्टः प्रकाशनः ॥ २९ ॥
ओजस्तेजोद्युतिधरः प्रकाशात्मा प्रतापनः ।
ऋद्धः स्पष्टाक्षरो मन्त्रश्चन्द्रांशुर्भास्करद्युतिः ॥ ३० ॥
अमृतांशूद्भवो भानुः शशबिन्दुः सुरेश्वरः ।
औषधं जगतस्सेतुः सत्यधर्मपराक्रमः ॥ ३१ ॥
भूतभव्यभवन्नाथः पवनः पावनोऽनलः ।
कामहा कामकृत् कान्तः कामः कामप्रदः प्रभुः ॥ ३२ ॥
युगादिकृद्युगावर्तो नैकमायो महाशनः ।
अदृश्यो व्यक्तरूपश्च सहस्रजिदनन्तजित् ॥ ३३ ॥
इष्टोऽविशिष्टः शिष्टेष्टः शिखण्डी नहुषो वृषः ।
क्रोधहा क्रोधकृत् कर्ता विश्वबाहुर्महीधरः ॥ ३४ ॥
अच्युतः प्रथितः प्राणः प्राणदो वासवानुजः ।
अपां निधिरधिष्ठानमप्रमत्तः प्रतिष्ठितः ॥ ३५ ॥
स्कन्दः स्कन्दधरो धुर्यो वरदो वायुवाहनः ।
वासुदेवो बृहद्भानुरादिदेवः पुरन्दरः ॥ ३६ ॥

अशोकस्तारणस्तारः शूरः शौरिर्जनेश्वरः ।
अनुकूलः शतावर्तः पद्मी पद्मनिभेक्षणः ॥ ३७ ॥
पद्मनाभोऽरविन्दाक्षः पद्मगर्भः शरीरभृत् ।
महर्द्धिर्ऋद्धो वृद्धात्मा महाक्षो गरुडध्वजः ॥ ३८ ॥
अतुलः शरभो भीमः समयज्ञो हविर्हरिः ।
सर्वलक्षणलक्षण्यो लक्ष्मीवान् समितिंजयः ॥ ३९ ॥
विक्षरो रोहितो मार्गो हेतुर्दामोदरः सहः ।
महीधरो महाभागो वेगवानमिताशनः ॥ ४० ॥
उद्भवः क्षोभणो देवः श्रीगर्भः परमेश्वरः ।
करणं कारणं कर्ता विकर्ता गहनो गुहः ॥ ४१ ॥
व्यवसायो व्यवस्थानः संस्थानः स्थानदो ध्रुवः ।
परर्द्धिः परमस्पष्टस्तुष्टः पुष्टः शुभेक्षणः ॥ ४२ ॥
रामो विरामो विरतो(जो) मार्गो नेयो नयोऽनयः ।
वीरः शक्तिमतां श्रेष्ठो धर्मो धर्मविदुत्तमः ॥ ४३ ॥
वैकुण्ठः पुरुषः प्राणः प्राणदः प्रणमः पृथुः ।
हिरण्यगर्भः शत्रुघ्नो व्याप्तो वायुरधोक्षजः ॥ ४४ ॥
ऋतुः सुदर्शनः कालः परमेष्ठी परिग्रहः ।
उग्रः संवत्सरो दक्षो विश्रामो विश्वदक्षिणः ॥ ४५ ॥
विस्तारः स्थावरस्थाणुः प्रमाणं बीजमव्ययम् ।
अर्थोऽनर्थो महाकोशो महाभोगो महाधनः ॥ ४६ ॥
अनिर्विण्णः स्थविष्ठो भूर्धर्मयूपो महामखः ।
नक्षत्रनेमिर्नक्षत्री क्षमः क्षामः समीहनः ॥ ४७ ॥
यज्ञ इज्यो महेज्यश्च क्रतुः सत्रं सतां गतिः ।
सर्वदर्शी निवृत्तात्मा सर्वज्ञो ज्ञानमुत्तमम् ॥ ४८ ॥
सुव्रतः सुमुखः सूक्ष्मः सुघोषः सुखदः सुहृत् ।

मनोहरो जितक्रोधो वीरबाहुर्विदारणः ॥ ४९ ॥
स्वापनः स्ववशो व्यापी नैकात्मा नैककर्मकृत् ।
वत्सरो वत्सलो वत्सी रत्नगर्भो धनेश्वरः ॥ ५० ॥
धर्मगुब्धर्मकृद्धर्मी सदक्षरमसत् क्षरम् ।
अविज्ञाता सहस्रांशुर्विधाता कृतलक्षणः ॥ ५१ ॥
गभस्तिनेमिः सत्त्वस्थः सिंहो भूतमहेश्वरः ।
आदिदेवो महादेवो देवेशो देवभृद्गुरुः ॥ ५२ ॥
उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः पुरातनः ।
शरीरभूतभृद्भोक्ता कपीन्द्रो भूरिदक्षिणः ॥ ५३ ॥
सोमपोऽमृतपः सोमः पुरुजित् पुरुसत्तमः ।
विनयो जयः सत्यसन्धो दाशार्हः सात्त्वतां पतिः ॥ ५४ ॥
जीवो विनयिता साक्षी मुकुन्दोऽमितविक्रमः ।
अम्भोनिधिरनन्तात्मा महोदधिशयोऽन्तकः ॥ ५५ ॥
अजो महार्हः स्वाभाव्यो जितामित्रः प्रमोदनः ।
आनन्दो नन्दनो नन्दः सत्यधर्मा त्रिविक्रमः ॥ ५६ ॥
महर्षिः कपिलाचार्यः कृतज्ञो मेदिनीपतिः ।
त्रिपदस्त्रिदशाध्यक्षो महाशृङ्गः कृतान्तकृत् ॥ ५७ ॥
महावराहो गोविन्दः सुषेणः कनकाङ्गदी ।
गुह्यो गभीरो गहनो गुप्तश्चक्रगदाधरः ॥ ५८ ॥
वेधाः स्वाङ्गोऽजितः कृष्णो दृढः सङ्कर्षणोऽच्युतः ।
वरुणो वारुणो वृक्षः पुष्कराक्षो महामनाः ॥ ५९ ॥
भगवान् भगहा नन्दी वनमाली हलायुधः ।
आदित्यो ज्योतिरादित्यः सहिष्णुर्गतिसत्तमः ॥ ६० ॥
सुधन्वा खण्डपरशुर्दारुणो द्रविणप्रदः ।
दिविस्पृक् सर्वदृग्व्यासो वाचस्पतिरयोनिजः ॥ ६१ ॥

त्रिसामा सामगः साम निर्वाणं भेषजं भिषक् ।
सन्यासकृच्छमः शान्तो निष्ठा शान्तिः परायणः ॥ ६२ ॥
शुभाङ्गः शान्तिदः स्रष्टा कुमुदः कुवलेशयः ।
गोहितो गोपतिर्गोप्ता वृषभाक्षो वृषप्रियः ॥ ६३ ॥
अनिवर्ती निवृत्तात्मा संक्षेप्ता क्षेमकृच्छिवः ।
श्रीवत्सवक्षाः श्रीवासः श्रीपतिः श्रीमतां वरः ॥ ६४ ॥
श्रीदः श्रीशः श्रीनिवासः श्रीनिधिः श्रीविभावनः ।
श्रीधरः श्रीकरः श्रेयश्श्रीमाँल्लोकत्रयाश्रयः ॥ ६५॥
स्वक्षः स्वङ्गः शतानन्दो नन्दिर्ज्योतिर्गणेश्वरः ।
विजितात्मा विधेयात्मा सत्कीर्तिश्छिन्नसंशयः ॥ ६६ ॥
उदीर्णः सर्वतश्चक्षुरनीशः शाश्वतस्थिरः ।
भूशयो भूषणो भूतिरशोकः शोकनाशनः ॥ ६७ ॥
अर्चिष्मानर्चितः कुम्भो विशुद्धात्मा विशोधनः ।
अनिरुद्धोऽप्रतिरथः प्रद्युम्नोऽमितविक्रमः ॥ ६८ ॥
कालनेमिनिहा शौरिः शूरः शूरजनेश्वरः ।
त्रिलोकात्मा त्रिलोकेशः केशवः केशिहा हरिः ॥ ६९ ॥
कामदेवः कामपालः कामी कान्तः कृतागमः ।
अनिर्देश्यवपुर्विष्णुर्वीरोऽनन्तो धनञ्जयः ॥ ७० ॥
ब्रह्मण्यो ब्रह्मकृद्ब्रह्मा ब्रह्म ब्रह्मविवर्धनः ।
ब्रह्मविद्ब्राह्मणो ब्रह्मी ब्रह्मज्ञो ब्राह्मणप्रियः ॥ ७१ ॥
महाक्रमो महाकर्मा महातेजा महोरगः ।
महाक्रतुर्महायज्वा महायज्ञो महाहविः ॥ ७२ ॥
स्तव्यः स्तवप्रियः स्तोत्रं स्तुतः स्तोतारणप्रियः ।
पूर्णः पूरयिता पुण्यः पुण्यकीर्तिरनामयः ॥ ७३ ॥
मनोजवस्तीर्थकरो वसुरेता वसुप्रदः ।

वसुप्रदो वासुदेवो वसुर्वसुमना हविः ॥ ७४ ॥
सद्गतिः सत्कृतिः सत्ता सद्भूतिः सत्परायणः ।
शूरसेनो यदुश्रेष्ठः सन्निवासः सुयामुनः ॥ ७५ ॥
भूतावासो वासुदेवः सर्वासुनिलयोऽनलः ।
दर्पहा दर्पदोऽदृप्तो दुर्धरोऽथापराजितः ॥ ७६ ॥
विश्वमूर्तिर्महामूर्तिर्दीप्तमूर्तिरमूर्तिमान् ।
अनेकमूर्तिरव्यक्तः शतमूर्तिः शताननः ॥ ७७ ॥
एको नैकः स वः कः किं यत्तत्पदमनुत्तमम् ।
लोकबन्धुर्लोकनाथो माधवो भक्तवत्सलः ॥ ७८ ॥
सुवर्णवर्णो हेमाङ्गो वराङ्गश्चन्दनाङ्गदी ।
वीरहा विषमः शून्यो घृताशीरचलश्चलः ॥ ७९ ॥
अमानी मानदो मान्यो लोकस्वामी त्रिलोकधृत् ।
सुमेधा मेधजो धन्यः सत्यमेधा धराधरः ॥ ८० ॥
तेजोवृषो द्युतिधरः सर्वशस्त्रभृतां वरः ।
प्रग्रहो निग्रहो व्यग्रो नैकशृङ्गो गदाग्रजः ॥ ८१ ॥
चतुर्मूर्तिश्चतुर्बाहुश्चतुर्व्यूहश्चतुर्गतिः ।
चतुरात्मा चतुर्भावश्चतुर्वेदविदेकपात् ॥ ८२ ॥
समावर्तो निवृत्तात्मा दुर्जयो दुरतिक्रमः ।
दुर्लभो दुर्गमो दुर्गो दुरावासो दुरारिहा ॥ ८३ ॥
शुभाङ्गो लोकसारङ्गः सुतन्तुस्तन्तुवर्धनः ।
इन्द्रकर्मा महाकर्मा कृतकर्मा कृतागमः ॥ ८४ ॥
उद्भवः सुन्दरः सुन्दो रत्ननाभः सुलोचनः ।
अर्को वाजसनिः शृङ्गी जयन्तः सर्वविज्जयी ॥ ८५ ॥
सुवर्णबिन्दुरक्षोभ्यः सर्ववागीश्वरेश्वरः ।
महाह्रदो महागर्तो महाभूतो महानिधिः ॥ ८६ ॥

कुमुदः कुन्दरः कुन्दः पर्जन्यः पवनोऽनिलः ।
अमृताशोऽमृतवपुः सर्वज्ञः सर्वतोमुखः ॥ ८७ ॥
सुलभः सुव्रतः सिद्धः शत्रुजिच्छत्रुतापनः ।
न्यग्रोधोदुम्बरोऽश्वत्थश्चाणूरान्ध्रनिषूदनः ॥ ८८ ॥
सहस्रार्चिः सप्तजिह्वः सप्तैधाः सप्तवाहनः ।
अमूर्तिरनघोऽचिन्त्यो भयकृद्भयनाशनः ॥ ८९ ॥
अणुर्बृहत् कृशः स्थूलो गुणभृन्निर्गुणो महान् ।
अधृतः स्वधृतः स्वास्यः प्राग्वंशो वंशवर्धनः ॥ ९० ॥
भारभृत् कथितो योगी योगीशः सर्वकामदः ।
आश्रमः श्रमणः क्षामः सुपर्णो वायुवाहनः ॥ ९१ ॥
धनुर्धरो धनुर्वेदो दण्डो दमयिता दमः ।
अपराजितः सर्वसहो नियन्ता नियमो यमः ॥ ९२ ॥
सत्त्ववान् सात्त्विकः सत्यः सत्यधर्मपरायणः ।
अभिप्रायः प्रियार्होऽर्हः प्रियकृत् प्रीतिवर्धनः ॥ ९३ ॥
विहायसगतिर्ज्योतिः सुरुचिर्हुतभुग्विभुः ।
रविर्विरोचनः सूर्यः सविता रविलोचनः ॥ ९४ ॥
अनन्तहुतभुग्भोक्ता सुखदो नैकजोऽग्रजः ।
अनिर्विण्णः सदामर्षी लोकाधिष्ठानमद्भुतः ॥ ९५ ॥
सनात् सनातनतमः कपिलः कपिरव्ययः ।
स्वस्तिदः स्वस्तिकृत् स्वस्ति स्वस्तिभुक् स्वस्तिदक्षिणः ॥ ९६ ॥
अरौद्रः कुण्डली चक्री विक्रम्यूर्जितशासनः ।
शब्दातिगः शब्दसहः शिशिरः शर्वरीकरः ॥ ९७ ॥
अक्रूरः पेशलो दक्षो दक्षिणः क्षमिणां वरः ।
विद्वत्तमो वीतभयः पुण्यश्रवणकीर्तनः ॥ ९८ ॥
उत्तारणो दुष्कृतिहा पुण्यो दुःस्वप्ननाशनः ।

वीरहा रक्षणः सन्तो जीवनं पर्यवस्थितः ॥ ९९ ॥
अनन्तरूपोऽनन्तश्रीः जितमन्युर्भयापहः ।
चतुरश्रो गभीरात्मा विदिशो व्यादिशो दिशः ॥ १०० ॥
अनादिर्भूर्भुवो लक्ष्मीः सुवीरो रुचिराङ्गदः ।
जननो जनजन्मादिर्भीमो भीमपराक्रमः ॥ १०१ ॥
आधारनिलयो धाता पुष्पहासः प्रजागरः ।
ऊर्ध्वगः सत्पथाचारः प्राणदः प्रणवः पणः ॥ १०२ ॥
प्रमाणं प्राणनिलयः प्राणधृत् प्राणजीवनः ।
तत्त्वं तत्त्वविदेकात्मा जन्ममृत्युजरातिगः ॥ १०३ ॥
भूर्भुवःस्वस्तरुस्तारः सविता प्रपितामहः ।
यज्ञो यज्ञपतिर्यज्वा यज्ञाङ्गो यज्ञवाहनः ॥ १०४ ॥
यज्ञभृद्यज्ञकृद्यज्ञी यज्ञभुग्यज्ञसाधनः ।
यज्ञान्तकृद्यज्ञगुह्यमन्नमन्नाद एव च ॥ १०५ ॥
आत्मयोनिः स्वयंजातो वैखानः सामगायनः ।
देवकीनन्दनः स्रष्टा क्षितीशः पापनाशनः ॥ १०६ ॥
शङ्खभृन्नन्दकी चक्री शार्ङ्गधन्वा गदाधरः ।
रथाङ्गपाणिरक्षोभ्यः सर्वप्रहरणायुधः ॥ १०७ ॥

श्रीसर्वप्रहरणायुध ओं नम इति ॥

वनमाली गदी शार्ङ्गी शङ्खी चक्री च नन्दकी ।
श्रीमान्नारायणो विष्णुः वासुदेवोऽभिरक्षतु ॥ १०८ ॥

श्रीवासुदेवोऽभिरक्षतु ओं नम इति ॥

———

इतीदं कीर्तनीयस्य केशवस्य महात्मनः ।
नाम्नां सहस्रं दिव्यानामशेषेण प्रकीर्तितम् ॥
य इदं शृणुयान्नित्यं यश्चापि परिकीर्तयेत् ।
नाशुभं प्राप्नुयात् किञ्चित् सोऽमुत्रेह च मानवः ॥
वेदान्तगो ब्राह्मणः स्यात् क्षत्रियो विजयी भवेत् ।
वैश्यो धनसमृद्धः स्याच्छूद्रः सुखमवाप्नुयात् ॥
धर्मार्थी प्राप्नुयाद्धर्ममर्थार्थी चार्थमाप्नुयात् ।
कामानवाप्नुयात् कामी प्रजार्थी प्राप्नुयात् प्रजाम् ॥
भक्तिमान् यः सदोत्थाय शुचिस्तद्गतमानसः ।
सहस्रं वासुदेवस्य नाम्नामेतत् प्रकीर्तयेत् ॥
यशः प्राप्नोति विपुलं याति प्राधान्यमेव च ।
अचलां श्रियमाप्नोति श्रेयः प्राप्नोत्यनुत्तमम् ॥
न भयं क्वचिदाप्नोति वीर्यं तेजश्च विन्दति ।
भवत्यरोगो द्युतिमान् बलरूपगुणान्वितः ॥
रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ।
भयान्मुच्येत भीतस्तु मुच्येतापन्न आपदः ॥
दुर्गाण्यतितरत्याशु पुरुषः पुरुषोत्तमम् ।
स्तुवन्नामसहस्रेण नित्यं भक्तिसमन्वितः ॥
वासुदेवाश्रयो मर्त्यो वासुदेवपरायणः ।
सर्वपापविशुद्धात्मा याति ब्रह्म सनातनम् ॥
न वासुदेवभक्तानामशुभं विद्यते क्वचित् ।
जन्ममृत्युजराव्याधिभयं नाप्युपजायते ॥
इमं स्तवमधीयानः श्रद्धाभक्तिसमन्वितः ।

युज्येतात्मा सुखक्षान्तिश्रीधृतिस्मृतिकीर्तिभिः ॥
नक्रोधो न च मात्सर्यं नलोभो नाशुभा मतिः ।
भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे ॥
द्यौः सचन्द्रार्कनक्षत्रं खं दिशो भूर्महोदधिः ।
वासुदेवस्य वीर्येण विधृतानि महात्मनः ॥
ससुरासुरगन्धर्वं सयक्षोरगराक्षसम् ।
जगद्वशेवर्ततेदं कृष्णस्य सचराचरम् ॥
इन्द्रियाणि मनो बुद्धिः सत्त्वं तेजो बलं धृतिः ।
वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च ॥
सर्वागमानामाचारः प्रथमं परिकल्पितः ।
आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः ॥
ऋषयः पितरो देवा महाभूतानि धातवः ।
जङ्गमाजङ्गमं चेदं जगन्नारायणोद्भवम् ॥
योगज्ञानं तथा सांख्यं विद्याः शिल्पादिकर्म च ।
वेदाः शास्त्राणि विज्ञानमेतत्सर्वं जनार्दनात् ॥
एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः ।
त्रीँल्लोकान् व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः ॥
इमं स्तवं भगवतो विष्णोर्व्यासेन कीर्तितम् ।
पठेद्य इच्छेत् पुरुषः श्रेयः प्राप्तुं सुखानि च ॥
विश्वेश्वरमजं देवं जगतः प्रभुमव्ययम् ।
भजन्ति ये पुष्कराक्षं न ते यान्ति पराभवम् ॥

न ते यान्ति पराभवम् ओं नम इति ॥

अर्जुन उवाच—

पद्मपत्रविशालाक्ष पद्मनाभ सुरोत्तम ।
भक्तानामनुरक्तानां त्राता भव जनार्दन ॥

श्रीभगवानुवाच—

यो मां नामसहस्रेण स्तोतुमिच्छति पाण्डव ।
सोऽहमेकेन श्लोकेन स्तुत एव न संशयः ॥

स्तुत एव न संशय ओं नम इति ॥

व्यास उवाच—

वासनाद्वासुदेवस्य वासितं ते जगत्त्रयम् ।
सर्वभूतनिवासोऽसि वासुदेव नमोऽस्तु ते ॥

॥ श्रीवासुदेव नमोऽस्तु त ओं नम इति ॥

पार्वत्युवाच—

केनोपायेन लघुना विष्णोर्नामसहस्रकम् ।
पठ्यते पण्डितैर्नित्यं श्रोतुमिच्छाम्यहं प्रभो ॥

ईश्वर उवाच—

श्रीराम राम रामेति रमे रामे मनोरमे ।
सहस्रनामतत्तुल्यं रामनाम वरानने ॥

॥ श्रीरामनाम वरानन ओं नम इति ॥

ब्रह्मोवाच—

नमोऽस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे ।
सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुगधारिणे नमः ॥

॥ सहस्रकोटीयुगधारिण ओं नम इति ॥

सञ्जय उवाच—

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥

श्रीभगवानुवाच—

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥
आर्ता विषण्णाः शिथिलाश्च भीताः घोरेषु च व्याधिषु वर्तमानाः ।
सङ्कीर्त्य नारायणशब्दमात्रं विमुक्तदुःखाः सुखिनो भवन्ति ॥
कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्याऽऽत्मना वा प्रकृतेः स्वभावात् ।
करोमि यद्यत् सकलं परस्मै नारायणायेति समर्पयामि ॥

यदक्षरपदभ्रष्टं मात्राहीनं च यद्भवेत् ।
तत्सर्वं क्षम्यतां देव नारायण नमोऽस्तु ते ॥

हरिः ओं सर्वं श्रीकृष्णार्पणमस्तु ।

---

इति श्रीविष्णोर्दिव्यसहस्रनामस्तोत्रं
संपूर्णम् ॥

Liberty Press, Madras

॥ श्रीः ॥

श्रीहस्तिशैलशिखरोज्ज्वलपारिजाताय नमः ।

श्रीमते रामानुजाय नमः ॥

# श्रीपराशरभट्टार्यविरचितं भगवद्गुणदर्पणाख्यम्

# श्रीविष्णुसहस्रनामभाष्यम् ॥

—~—

श्रीपराशरभट्टार्यः श्रीरङ्गेशपुरोहितः ।
श्रीवत्साङ्कसुतः श्रीमान् श्रेयसे मेऽस्तु भूयसे ॥

—:(०):—

वन्दे गोविन्दतातौ मुनिमथ मनवै लक्ष्मणार्यं महान्तं
ध्यायेयं यामुनार्यं मम हृदि तनवै राममेवाभियायाम् ।
पद्माक्षं प्रेक्षिषीय प्रथममपि मुनिं नाथमीडे शठारिं
स्तौमि प्रेक्षेय लक्ष्मीं शरणमशरणः श्रीधरं संश्रयेयम् ॥

ओं नमो गजवक्त्राद्यैः पारिषद्यैः प्रशासते ।
श्रीरङ्गराजसेनान्ये सूत्रवत्या समेयुषे ॥ १ ॥

नमो नारायणायेदं कृष्णद्वैपायनात्मने ।
यदामुष्यायणा वेदा महाभारतपञ्चमाः ॥ २ ॥

जातो लक्ष्मणमिश्रसंश्रयधनाच्छ्रीवत्सचिह्नाद्वपेः
भूयो भट्टपराशरेति फणितः श्रीरङ्गभर्त्रा स्वयम् ।
श्रीश्रीरङ्गपतिप्रसादतृपया श्रीरङ्गनाथाह्वयः
श्रीरङ्गेश्वरकारितो विवृणुते नाम्नां सहस्रं हरेः ॥३॥

संसारोऽयमपण्डितो भगवति प्रागेव भूयः कलौ
पूर्णंमन्यतमे जने श्रुतिशिरोगुह्यं ब्रुवे साहसात् ।
तत्र स्तोत्रमिदं प्रकाशयति यस्तुल्यश्च यस्तावुभौ
व्यासः कारुणिको हरिश्च तदिदं मौख्यं सहेतां मम ॥

अर्थे हरौ तदभिधायिनि नामवर्गे
तद्व्यञ्जके मयि च बन्धविशेषमेत्य ।
सेवध्वमेतदमृतं प्रणिपत्य याचे
मध्यस्थमत्सरिजना इह मा च भूवन् ॥ ५ ॥

इह खलु निखिलोऽपि चेतयमानः प्रमाणतः प्रमेयं परिच्छिन्दन्, तच्चेत्प्रमेयमनुकूलं तदुपाददीत, यथा स्रक्चन्दनकनकादिकम्; तच्चेद्विपरीतम् अपोहेत, यथा क्षुरकण्टकादिकम्; तच्चेदनुभयरूपम् उपेक्षेत, यथा काष्ठलोष्टादिकम्। तत्र प्रत्यक्षादिप्रमाणान्तरगोचरयोरर्थकामयोः अत्यल्पत्वानर्थकरत्वबीभत्सत्वभङ्गुरत्वदुःखमिश्रत्वदुःसाधत्वाद्यनन्तदोषानुषङ्गेण त्याज्यत्वात्, शास्त्रप्रमेययोर्धर्मपरतत्त्वयोः तद्वैपरीत्यादनन्तमङ्गलसंगतत्वाच्च, शास्त्रतदर्थयोरुपादेयत्वं प्रकाश्यते। यथाहुरैतिहा-

सिका: पौराणिकाश्चैककण्ठाः—* सत्यं सत्यं पुनः सत्यमुद्धृत्य भुज-मुच्यते। वेदशास्त्रात्परं नास्ति न दैवं केशवात्परम्॥ इति। तत्र चतुर्दशविद्यास्थानप्रधानभूतस्य वेदस्य * इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्। बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति॥ [भा. आ. १—२७३] इति प्रकारेणेतिहासपुराणाभ्यामर्थे निर्णेतव्ये पुराणेभ्य इतिहासोत्कर्षे च विवक्षिते श्रीमद्रामायणवन्महाभारतं शरणम्॥

तत्र—महाभारतसारत्वात् ऋषिभिः परिगानतः।
वेदाचार्यसमाहारात् भीष्मोत्कृष्टमतत्वतः॥

परिग्रहातिशयतो गीताद्यैकार्थ्यतश्च नः।
सहस्रनाम्नामध्याय उपादेयतमो मतः॥

महाभारतं हि परिग्रहविशेषावसिताविप्लववचनसौष्ठवाद्यात्मकाव इतिहासत्वकृतात्प्राबल्यात्, पुराणेषु तावत् वायुप्रोक्तशैवयोः * मतिमन्थानमाविध्य येनासौ श्रुतिसागरात्। जगद्धिताय जनितो महाभारतचन्द्रमाः॥, भविष्यत्पुराणे * बिभेति गहनाच्छास्त्रान्नरस्तीव्रादिवौषधात्। भारतः शास्त्रसारोऽयमतः काव्यात्मना कृतः॥, मात्स्ये * यस्य द्वैपायनः पुत्रः स्वयं विष्णुरजायत। प्रकाशो जनितो येन महाभारतचन्द्रमाः॥, वैष्णवे * कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम्। को ह्यन्यो भुवि मैत्रेय महाभारतकृद्भवेत्॥ [३. ४. ५.], मार्कण्डेये * व्यासवाक्यजलौघेन कुधर्मतरुहारिणा। वेदशैलावतीर्णेन नीरजस्का मही कृता॥ इत्यादिभिः, स्वस्मिंश्च * यो विद्याचतुरो वेदान् साङ्गोप-

निपदान्द्विजः । न चाख्यानमिदं विद्यान्नैव स स्याद्विचक्षणः ॥ [भा. आ. २. ३७६.] इत्यादिभिश्च परस्सहस्रैर्वचनैः प्रशस्यमानत्वात्, साङ्ग-श्रुतिस्मृतीतिहासपुराणसंवादात्, * यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्कचित् ॥ [भा.आ. ६२. ८३.] इति लौकिकवैदिकसकलार्थनिर्णयाधिकृतत्वेन कचिदप्यपक्षपातित्वाच्च पुराणेभ्यो बलवत्तरं बहवो बुद्धिशालिनोऽध्यवसन्नुः । तत्रापि स्वहृदयभूते आनुशासनिके पर्वणि दानधर्मेषु समस्तशास्त्रार्थे निष्कृष्य निगम्यमाने, सारसंग्रहरूपेण खल्वयं सहस्रनाम्नामध्यायोऽवतारितः । तस्मात्प्रामाण्यकारणत्रकर्षेण तत्त्वार्थतात्पर्यलिङ्गैश्चाप्रामाण्यप्रशंसाद्यन्यपरत्वशङ्कयोः सुदूरनिरस्तत्वेन परमप्रकृष्टार्थप्रतिपादकत्वाच्चाभ्युदयनिःश्रेयसार्थिनामयमेवोपादेयतमः ॥

तथा ऋषिभिः परिगीतत्वतः — * ऋषिभिः परिगीतानि इत्येतद्विवरणावसर एवैष हेतुरुपपादयिष्यते ॥

किञ्च, वेदाचार्यसमाहारात् — भगवान् हि वेदाचार्यः कृष्णद्वैपायनः परमाप्ततमः, भगवन्नारायणावतारत्वेन निरतिशयज्ञानैश्वर्यादिकल्याणगुणकतया निरस्तसमस्तविप्रलम्भादिदोषसंभावनत्वात्, कलिबलमन्दाधिकारिमनुष्यानुग्रहाय व्यस्तसमस्तवेदत्वात्, वेदार्थयोस्तत्त्वानुष्ठानयोरज्ञानसंशयविपर्ययपरिजिहीर्षया प्रणीतपञ्चमवेदत्वात्, स्ववचनेन क्षत्रियं विश्वामित्रं ब्राह्मणीकृतवतो भगवतो वसिष्ठस्य नप्तृत्वात्, वसिष्ठपुलस्त्यवरप्रदानलब्धदेवतापारमार्थ्यज्ञानपुराणसंहिताकर्तृत्वादिविषयवरातिशयवत्तया लैङ्गादिष्वपि पुराणेषु प्रसिद्धस्य भगवतः पराशरस्य चापत्यत्वात्,

अनन्यसाधारणतपस्समाधिविशेषैश्चाशेषपरमर्षिपरिषत्पूजितत्वाच्च । एवं-विधेन अनेन ऋषिभिः परिगीतानामेव भगवन्नाम्नामत्रैतत्स्तोत्ररूपेण समाहृतत्वाच्चायमुपादेयतमः ॥

अपि च भीष्मोत्कृष्टमतत्वतः—भीष्मोऽपि हि (प्रत्ययित)प्रतीततमः । तथा हि, राजधर्मेषु धर्मराजाय भगवता व्यासेन * श्रोतुमिच्छसि चेद्धर्मान्निखिलेन नराधिप । प्रेहि भीष्मं महाबाहो वृद्धं कुरुपितामहम् ॥ स ते सर्वरहस्येषु संशयान् मनसि स्थितान् । छेत्ता भागीरथीपुत्रः सर्वज्ञः सर्वतत्त्ववित् ॥ साक्षाद्ददर्श यो देवान् सर्वान् शक्रपुरोगमान् ॥ इत्यादौ, * यस्य ब्रह्मर्षयः पुण्या नित्यमासन् सभासदः । यस्य नाविदितं किंचित् ज्ञानं ज्ञेयेषु विद्यते ॥ स ते वक्ष्यति धर्मज्ञो धर्मान् सूक्ष्मार्थतत्त्ववित् ॥ [भा. शा. ३७.] इत्यादौ च । स्वयं च भगवता * शरतल्पगतो भीष्मः शाम्यन्निव हुताशनः । मां ध्याति पुरुषव्याघ्रस्ततो मे तद्गतं मनः ॥ दिव्यास्त्राणि महातेजा यो धारयति बुद्धिमान् । साङ्गांश्च चतुरो वेदांस्तमस्मि मनसा गतः ॥ स हि भूतं भविष्यच्च भवच्च भरतर्षभ । वेत्ति धर्मभृतां श्रेष्ठस्ततो मे तद्गतं मनः ॥ तस्मिन्नस्तमिते भीष्मे कौरवाणां धुरंधरे । ज्ञानान्यल्पीभविष्यन्ति तस्मात्त्वां चोदयाम्यहम् ॥ [भा. शा. ४६] इत्यादौ च । * यच्च त्वं वक्ष्यसे भीष्म पाण्डवायानुपृच्छते । वेदप्रवाद (लाप) इति ते स्थास्यन्ति वसुधातले ॥ [भा. शा. ५४] इत्यादौ, * यद्धि भूतं भविष्यच्च भवच्च भरतर्षभ । सर्वं तज्ज्ञानवृद्धस्य तव पाणाविवाहितम् ॥ अहं च त्वाऽभिजानामि

स्वयं पुरुषसत्तम ॥ तपसा(ऽसि) हि भवान् शक्तः स्रष्टुं लोकांश्चराचरान् ॥ [भा. शा. ५०] इत्यादौ * न ते ग्लानिर्न ते मूर्च्छा इत्युपक्रम्य * सत्त्वस्थं च मनो नित्यं तव भीष्म भविष्यति। रजस्तमोभ्यामस्पृष्टं घनैर्मुक्त इवोडुराट् ॥ [भा. शा. ५२] इत्यादौ च। भगवता नारदेन च * कृत्स्नान् हि त्रिविधान् धर्मांश्चातुर्वर्ण्यस्य वेत्त्ययम् ॥ तच्छीघ्रमनुयुङ्ध्वं संशयान् मनसि स्थितान् ॥ [भा. शा. ९४] इत्यादौ च प्रपञ्च्य, एवं बहुमहर्षिवृद्धसेवादीर्घब्रह्मचर्यतपःसमाधिलब्धसर्वसाक्षात्कारादिप्रभावविशेषवत्तया प्रशस्य, परतत्त्वधर्मप्रवर्तकतया वरान् वितीर्य नियुक्तत्वात्, मातापितृशुश्रूषणतत्प्रसादवरलाभसौभाग्यात्, स्वयं च * दाहो मोहः श्रमश्चैव क्लमो ग्लानिस्तथा रुजः। तव प्रसादाद्गोविन्द सद्यो व्यपगतानि मे ॥ यच्च भूतं भविष्यच्च भवच्च परमच्युत। तत्सर्वमनुपश्यामि पाणौ फलमिवाहितम् ॥ वेदोक्ताश्चैव ये धर्माः वेदान्तनियताश्च ये। तान् सर्वान् संप्रपश्यामि वरदानात्तवाच्युत ॥ इत्यादौ, * युवेव चास्मि संवृत्तस्त्वदनुध्यानबृंहितः। वक्तुं श्रेयः समर्थोऽस्मि त्वत्प्रसादाज्जनार्दन ॥ [भा. शा. ९४] इत्यादौ च प्रतिसंहितयथोक्तस्वपरमार्थकत्वाच्च।, एवंविधस्य भीष्मस्य * एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः इत्यादिना अधिकतमत्वसमतत्वेन ख्यापितत्वाच्च अयमध्यायः उपादेयतमः ॥

परिग्रहातिशयतः—परिग्रहो हि सार्वभौमो भगवन्नामसहस्रस्य। शास्त्रेषु तावत् सभापर्वणि * देवो नामसहस्रवान् [३८-११] इति

भगवानपि नामहसस्रसंबन्धेन भूष्यते। श्रीविष्णुधर्मे च श्रीगजेन्द्रमोक्षणे * सहस्रशुभनामानमादिदेवमजं विभुम्। [६९] इति। अत्र चोपोद्घातफलश्रुत्योर्गुणप्रपञ्चो द्रक्ष्यते। आयुर्वेदादिषु च दृष्टादृष्टशास्त्रेषु, यथा चरकसंहितायाम् * विष्णुं सहस्रमूर्धानं चराचरपतिं विभुम्। स्तुवन्नामसहस्रेण ज्वरान् सर्वान् व्यपोहति ॥ इति। अद्यतने च नानाविप्रकीर्णमूले मेहस्य प्रायश्चित्ते * जप्यं पुरुषसूक्तकम् इत्यारभ्य * तथैव भगवन्नामसहस्रं भारतोदितम्। यक्ष्मणः * तथैव भगवन्नामसहस्रं परिकीर्तयेत्। ज्वरविशेषस्य * होमस्तु पूर्ववज्जप्यं विष्णोर्नामसहस्रकम्। ग्रहादेः * आसप्तमं मरुत्सूक्तं विष्णोर्नामसहस्रकम्। अन्यत्र चैवंविधमन्वेष्टव्यम्। प्राकृताः कवयोऽपीदं सर्वजीवरक्षात्वेन वर्णयन्ति। यथाह भट्टबाणः सूतिकागृहवर्णने—* अविच्छिन्नपठ्यमाननारायणनामसहस्रम् [पूर्वकादम्बर्यां] इति। लोके च ग्रहणधारणश्रवणजपसंकीर्तनलेखनव्याख्यानतन्निष्ठपूजनप्रभृतिभिर्विषपिशाचव्याधिग्रहदुःस्वप्नदुर्निमित्ताद्यशिवोपशमनाय, महापातकादिप्रायश्चित्ताय, ऐहिकामुष्मिकाभ्युदयसिद्धये, संसारग्रन्थिविस्रंसनाय, वैष्णवपरमपदावाप्तये, तादात्विकभगवद्गुणसुधास्वादसुखाय च आबालमूकमूर्खस्त्रीनास्तिकैकभेषजं निरतिशयश्रद्धाभक्तिविश्वासपूर्वकं परिगृह्यते। न चैवंविधः परिग्रहो वेदानामपि; तेषां मूर्खादिभिरपरिग्रहात्, कुलचरणगोत्रादिव्यवस्थया प्रतिशाखं परिग्रहविभागाच्च। एवं परिग्रहातिशयादप्यस्योपादेयतमत्वम् ॥

गीताद्यैकार्थ्यतश्च—भारतसिद्धान्तभूतभगवद्गीतानारायणीययान-

सन्ध्यग्रपूजोत्तमानुशासनप्रभृतिप्रदेशान्तरतात्पर्यनिष्कर्षरूपत्वेन तदेकार्थत्वाच्च ।

एवमेभिः षड्भिर्हेतुभिः प्रेक्षापूर्वकारिणां परमोपादेयतया निर्णीतं, व्यासदेवश्रवोदेवस्थाननारदवात्स्याश्मसुमन्तुप्रभृतिभिः सकलविद्यादेशिकैर्ब्रह्मदक्षभिर्देवब्रह्मर्षिभिः स्वयं च भगवता सर्वेश्वरेण गीतोपनिषदाचार्येण पूर्वेषामपि गुरुणा पुण्डरीकविलोचनेन श्रोतृकोटिनिविष्टेन भीष्माच्छ्रुत्वाऽनुमोदितं श्रीमन्नामसहस्राध्यायं भगवद्गुणतत्त्वप्रतिपत्तये व्याकुर्महे ॥

तत्र प्रागेव पौनःपुन्येन तत्र तत्र परतत्त्वपरेषु प्रदेशेष्वशेषार्थनिर्णयश्रवणात्तुष्टंमन्यतया स्वयमपृच्छते जनमेजयाय परमसौहार्दादन्यदुर्लभतमं ग्राहयन् स्वयमेव श्रीवैशम्पायन उवाच—

श्रुत्वा धर्मानशेषेण पावनानि च सर्वशः ।
युधिष्ठिरः शान्तनवं पुनरेवाभ्यभाषत ॥ १ ॥

श्रुत्वेत्यादि । धर्मान्—श्रुतिस्मृत्यादिचोदनालक्षणाभ्युदयनिःश्रेयसफलान् राजमोक्षदानधर्मरूपेण बहून् । अशेषेण—कार्त्स्न्येन, ये च यावन्तस्तावतश्चेत्यर्थः । पावनानि च—तपस्तीर्थसेवादीनि शुद्धिकराणि च । सर्वशः—सर्वप्रकारम्; फलतोऽङ्गतस्स्वरूपतोऽधिकारतश्च । श्रुत्वा, युधिष्ठिरः—साक्षाद्धर्मसूनुः । शान्तनवं—शन्तनोर्गङ्गायां जातत्वेनाभिजाततमम् । पुनरेवाभ्यभाषत—पुनश्च पप्रच्छ । पुनः पृच्छा च

भीष्मेणात्मनीनतया स्वीकृतमतं ज्ञातुम्; ‘ को धर्मः सर्वधर्माणां भवतः परमो मतः ’ इत्यनन्तरोक्तेः । तच्च सदाचारप्रावण्यात् । सन्तो ह्याचार्यनिष्ठामन्विष्य तद्रुचिपरिगृहीतमेव तत्त्वं हितं च रोचयन्ते; न तु प्रामाणिकत्वमात्रेण ॥ १ ॥

तत्रेदमादावेवोदैरिराम—प्रेक्षावद्भिः प्रमाणेन परिच्छिद्यानुकूलं प्रमेयमुपादेयमिति । तच्च द्वैधं वर्तते उपायोपेयात्मना । उपेयं च प्रियप्रियतरप्रियतमरूपेण त्रैधम्, उपायश्च हितहिततरहिततमरूपेण । तत्रोपेयस्य जन्मर्द्धिपरिणामानित्यत्वादयः, चेतनधर्माः क्लेशकर्मविपाकाशयाश्च दोषाः; गुणाश्च दोषासंभेदरुचिरत्वस्थावरत्वभूयस्त्वविशिष्टास्संविदानन्दैश्वर्यविभूतिविशेषादयः । उपायस्य तु व्ययायासभूयस्त्वव्यभिचारित्वफल्गुफलत्वादयो दोषाः; गुणाश्च नियतनिरपायलघुतरबहुफलकत्वादयः । एवंविधदोषहानगुणवत्त्वतारतम्येन उपायोपेययोः तरतमभावः उभयत्रापि संभवति । उत्कृष्टतमे उत्कृष्टोत्कृष्टतरयोर्निकृष्टवद्वर्जनीयत्वमेव । तत्र अनिष्टेभ्यः इष्टेभ्योऽपि निकृष्टेभ्यः निष्कृष्य उत्कृष्टतममुपादातुम् उपायोपेयौ सह तारतम्येन प्रष्टव्यौ । तौ च विवक्षावशेन षोढा विभज्य पृच्छन् युधिष्ठिर उवाच, किमेकमिति श्लोकद्वयेन ।

तत्रोपायस्योपेयार्थत्वात्, प्रधानभूतमुपेयं पृच्छन् तस्य च तत्त्वशास्त्रेषु परतत्त्वपरमप्राप्यात्मना द्वेधोपदेशदर्शनात्, प्रथमं परतत्त्वरूपं पृच्छति—

युधिष्ठिर उवाच—

किमेकं दैवतं लोके किं वाऽप्येकं परायणम् ।

किमेकमिति । लोके इति प्रतिप्रश्नमनुषज्यते ; भवतः परमो मतः इति च । सिंहावलोकनन्यायेन यथार्हं च विभक्तिर्विपरिणमनीया । लोक्यते अनेनेति लोकः, श्रुतिस्मृत्यादिशरीरं शास्त्रम् । एकम्—प्रधानं समाधिकरहितम्, 'परमं यो महत्तेजः,' 'तस्य लोकप्रधानस्य' इति प्रतिवचनानुगुण्यात् । न चायं स्वरूपमात्रपरः एकत्वसंख्यापरो वा एकशब्दः । दैवतमिति प्रातिपदिकैकवचनाभ्यां सिद्धत्वात्, तयोर्व्यावर्त्याभावाच ; नहि किंचिद्दैवतमस्वरूपमनेकं वाऽस्ति, येन कस्यचिदेवैकत्वं विशेषः ; तदनुगुणप्रतिवचनाभावाच । दैवतम्—द्योतनादिपरमैश्वर्यासाधारणगुणचिह्नितम् । तत्त्वशास्त्रेषु प्रतिपाद्यं भवतः किं परमं मतमित्यर्थः । अयं च शास्त्रेषु समयेषु च सर्वाधिकं तत्त्वमभ्युपेयुषामपि मायाद्यौपाधिकविवर्तपरिणामविशेषनिर्वाह्यज्ञानशक्त्याद्यैश्वर्यत्वस्वाभाविकमैश्वर्यत्वादौ सामान्यतो विशेषतश्च हरिहरहिरण्यगर्भादितत्त्वपरावरभावेन विप्रतिपत्तिदर्शनेन संदेहात् प्रश्नः । फलशास्त्रेषु मोक्षे तावत् स्वरूपाविद्याविशेषवैशेषिकगुणोच्छेदपरमात्मसाधर्म्यतद्गुणसंक्रान्तितच्छायापत्त्यानन्दादिस्वरूपाविर्भावमात्रतत्कैङ्कर्याविर्भावादिलक्षणविप्रतिपत्तिदर्शनात् संदिहानः परमुपेयं पृच्छति—किं वाऽप्येकं परायणमिति । दैवतं परायणमित्यादि किमन्यदन्यदुपदिश्यते, उत तत्तदवस्थामात्रभेदेनैकमेवेति विवेक्तुं वाऽपीति निपातद्वयम् । एकमिति पूर्ववत् । परं—निर्दोषनिरतिशयमङ्गलस्व-

भावतयोत्कृष्टतमम् । अयनं प्राप्यम् । ऐहिकामुष्मिकेषु पुरुषाभिलषणीयेषु कः परमपुरुषार्थो भवतोऽभिमत इति । एवमुपेयं द्विधा पृष्टम् ।

अथोपायः तत्तच्छास्त्रेषु कर्मज्ञानभक्तियोगानां विकल्पसमुच्चयाङ्गाङ्गिभावादिविवादात् संशयानेन प्रष्टव्यः । स च सिद्धस्साध्यस्सालम्बनरूपश्च । सिद्धस्त्वाराध्यमानतया फलप्रदा देवता । तां च लघ्वलघूपायसाध्यतया द्वेधा विभज्य पृच्छति—स्तुवन्तः कमित्यर्धेन—

स्तुवन्तः कं कमर्चन्तः प्राप्नुयुर्मानवाश्शुभम् ॥ २ ॥

कं स्तुवन्तः—गुणसङ्कीर्तनमात्रेणाराधयन्तः । कमर्चन्तः—उपासनरूपया भक्त्या परमं पूजनं कुर्वन्तः । मानवाः—मनुष्यत्वमात्रपरिकराः । शुभं—द्विविधम्, अभ्युदयनिःश्रेयसरूपम् । प्राप्नुयुः ॥२॥

अथ साध्यः वाङ्मनःकायनिष्पाद्यजपध्यानार्चनप्रभृतिर्देवतावर्जनात्मको धर्मः; तत्र परमं पृच्छति— भजनं स्वानुकूलीकर

को धर्मः सर्वधर्माणां भवतः परमो मतः ।

को धर्म इति । उक्तलक्षणानां सर्वधर्माणां मध्ये परमः—निस्तुल्याधिकः, को भवतः अभिमतः-सुनिश्चित्यापद्धनवत् स्वीकृतः ॥

अथ सालम्बनेषु स्तोत्रमन्त्रशुभाश्रयगन्धपुष्पाद्युपकरणेषु वाचिकजपालम्बनं पृच्छति—

किं जपन् मुच्यते जन्तुर्जन्मसंसारबन्धनात् ॥ ३ ॥

किं जपन्निति। नियमविशेषवन्मन्त्राद्यावर्तनं जपः। * जप्येनैव तु संसिध्येत् ब्राह्मणो नात्र संशयः। कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥ [मनु २. ८७] * द्रव्ययज्ञाज्जपो यज्ञो विशिष्टो दशभिर्गुणैः। [मनु २. ८५] * यज्ञानां जपयज्ञोऽस्मि [गी १०. २९] इति जप श्रैष्ठ्यान्मानसकायिकविषयौ न पृच्छयेते। जन्तुः—जनन धर्मा। जन्मसंसारबन्धनात्—जन्मेति जरामरणगर्भनिरययातनादिः संसारस्य कार्यवर्गः प्रदर्श्यते। संसार इति च अविद्याकर्मवासनारुचिप्रकृतिबन्धरूपः कारणवर्गः। ताभ्यां बन्धनं परमपदप्राप्तिप्रतिबन्धः, तस्मात् मुच्यते। इदं च सर्वफलोपलक्षणम्, जपादेः सकलफलसाधनत्वस्य वक्ष्यमाणत्वात्। तत्र अशेषेण सर्वशः इत्युपक्रमेण 'लोके मानवाः शुभम्' इत्यादि विशेषणैश्च कालाधिकार्यङ्गफलप्रकारविशेषा अपि प्रकृष्टाः प्रष्टव्यतया सूचिताः ॥ ३ ॥

इमां षट्प्रश्नीं प्रतिब्रुवाणो भीष्म उवाच। अत्र प्रायेण व्युत्क्रमेण प्रतिवचनं क्रमिकोपनिबन्धनं च प्रतिवचनं वक्ष्यते। तत्रोपायद्वारकत्वादुपेयस्य प्रथमं तं प्रतिविवक्षन् आनन्तर्यात् तत्रैवादरातिशयाच्च जपालम्बनं प्रतिवक्ति—

भीष्म उवाच—

जगत्प्रभुं देवदेवमनन्तं पुरुषोत्तमम्।
स्तुवन्नामसहस्रेण पुरुषः सततोत्थितः ॥ ४ ॥

जगत्प्रभुमिति। जगतो जङ्गमाजङ्गमस्य प्रभुं—स्वामिनम्। यथा मनुष्येभ्यो देवाः ऐश्वर्यपरिचर्याभ्यामधिकाः, एवमेतेषामपीति देवदेवम्। अनन्तं—सर्वतोऽनवच्छेद्यवैभवम्, पुरुषोत्तमम्—परमोदारम्, नामसहस्रेण जपालम्बनीकृतेन। स्तुवन्— स्तुवन्निति * लक्षण-हेत्वोः [अष्टा ३. २. १२६] इति हेतौ शतृप्रत्ययः। सर्वदुःखातिगो भवेदित्यनेन संबन्धः। स्तवनं सर्वदुःखनिवर्तकमित्यर्थः। क एवं स्यात्? पुरुषः—चेतनः। कथंभूतः? सततोत्थितः—निरन्तरमुद्युञ्जानः। भगवत्स्तुतिचिन्ताद्यविच्छेदस्य परमप्रियहितत्वात् तद्विच्छेदस्य वैशसत्वाच्च। श्रूयते हि—* यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते। अथ सोऽभयंगतो भवति। यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते। अथ तस्य भयं भवति। [तै. आ. १. ७] इत्यादि। उपबृंह्यते च—* यन्मुहूर्तं क्षणं वाऽपि वासुदेवो न चिन्त्यते। सा हानिस्तन्महच्छिद्रं सा भ्रान्तिः सा च विक्रिया॥ * वरं हुतवहज्वालापञ्जरान्तर्व्यवस्थितिः। न शौरिचिन्ताविमुखजनसंवासवैशसम्॥ * एकस्मिन्नप्यतिक्रान्ते मुहूर्ते ध्यानवर्जिते। दस्युभिर्मुषितेनेव युक्तमाक्रन्दितुं भृशम्॥ इति च। एवं साध्येषु जपस्यालम्बनमुक्तम्॥ ४॥

अर्चनस्तवनयोरेव परमधर्मत्वेन विवक्षितत्वात् धर्मविषयं पञ्चमं प्रश्नमुलङ्घ्य प्रथममर्चनीयस्तोतव्यविषयौ चतुर्थतृतीयौ प्रतिवदन्नर्च्यतमं तावत् सार्चनाप्रकारमाह—

तमेव चार्चयन्नित्यं भक्त्या पुरुषमव्ययम्।
ध्यायंस्तुवन्नमस्यंश्च यजमानस्तमेव च ॥ ५ ॥

तमेवेति यजमान इत्यन्तेन। उक्तजपालम्बनविषय एवार्च्य-तमोऽपीत्यवधारयति—तमेव चेति। यथाहुः—* तमिमं सर्वसंपन्नमाचार्यं पितरं गुरुम्। अर्च्यमर्चितुमिच्छामस्सर्वे संमन्तुमर्हथ॥ [भा. सभा. ३८-२१] * तस्मात्पूज्यतमं नान्यमहं मन्ये जनार्दनात्। * ब्रह्माणं शितिकण्ठं च याश्चान्या देवताः स्मृताः। प्रतिबुद्धा न सेवन्ते यस्मात् परि-मितं फलम्॥ [भा० मो० ३४२-३६] इत्यादि। * अन्तवत्तु फलं तेषाम् [गी. ७-२३] इति च। पुरुषं—पुण्डरीकाक्षम्। अव्ययं—सदाऽनुभवेऽप्यनुरूपाक्षयोत्तरोत्तरगुणसंस्तवम्; अर्चयन्—तत्परिचरण-रूपं भक्तियोगमुपाददानः अधिकारी, नित्यं—* मच्चित्ता मद्गतप्राणाः (गी. १०-९) इति प्रक्रियया अन्यथा क्षणमपि स्थातुमशक्नुवन्। कथमर्चयन्? भक्त्या—स्वामिनि दासस्यानुरागमयी स्थितिर्भक्तिः। तया इत्थंभूतः। पुनश्च कथम्? ध्यायन्—मानसमविच्छिन्नामृतधाराकारं निःशेषसंसारतापत्रयनिर्वापणं भगवद्गुणचिन्तनं कुर्वन्। पुनश्च कथम्? स्तुवन्—वाचिकं च तादृशं तदनुभवजन्यहर्षप्रकर्षपुलकितशरीरं बाष्प-गद्गदकण्ठं तद्गुणसङ्कीर्तनं समीहमानः। पुनश्च कथम्? नमस्यन्—अत्यन्तं प्रह्वीभवन्। भक्तिपराधीनतया बाह्यान्तरसकलकरणैर्निर्ममत्वावन-म्रैरात्मीयैः शरीरेण वचसा च सह सर्वं मदीयं त्वदीयं त्वमेव गृहाणेति भगवत्पादपद्मयोरात्मानमहंमानमलीमसं समर्पयन्नित्यर्थः। पुनश्च कथम्?

यजमानः—देवपूजनमाचरन्। स्वविषयीकारमहोपकारानुरूपप्रत्युपकारादर्शनभुवा संभ्रमेणाकृत्रिमभक्त्युपहृतप्रयतमनोहरार्घ्यपुष्पमधुपर्कप्रभृत्यौपचारिकसांस्पर्शिकाभ्यवहारिकरूपभोगानुरूपभोगानुपूर्व्यादेव समाराधनमसाधारणमत्यन्तमादरेण कुर्वाण इत्यर्थः। एवंवृत्तः सर्वदुःखातिगो भवेदिति ॥ ५ ॥

अयमेव भक्तियोगो मुक्तिमहापथस्त्रय्यन्तेषु चिन्त्यमानः प्रत्यभिज्ञायते। तथा हि वर्णाश्रमधर्मैरारादुपकारकैः शमदमादिभिरात्मगुणैस्सन्निपत्योपकारकैश्चाङ्गजातैरभिनिष्पाद्यं वेदनध्यानध्रुवानुस्मृतिविवेकजादिपदपर्यायगोचरान्तरप्रतीतिसन्ततिमिश्चित्तवृत्तिभिरव्यवहितानवरतप्रवाहा—सकृदावृत्तसादरप्रत्ययसंस्कारप्रचयघटितपटुतरप्रत्यक्षशिरस्कं तत्तत्सदानन्दपुरुपोपकोसलादिसंज्ञकपरविद्याव्यवस्थितगुणोपसंहारमर्यादं ब्रह्मोपासनं भगवान् बादरायणः * तमेवं विद्वान् [पु० २०] ब्रह्मविदाप्नोति परम् [तै० आ०-२-१] * यज्ञेन दानेन तपसाऽनाशकेन [बृ. ६-४-२२] * शान्तो दान्तः [बृ. ६-४-२३] इत्यादित्रय्यन्तवचनानि * सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्, * शमदमाद्युपेतः स्यात् [ब्र. सू. ३-४, २६-२७] 'आवृत्तिरसकृदुपदेशात्' [४-१-१] इत्येवंप्रकारब्रह्मसूत्रन्यायैर्मथित्वा मोक्षसाधनं निरणैषीत् ॥ वाक्यकारश्च * वेदनमुपासनं स्यात्तद्विषये श्रवणात् इति। इदमेवोपासनं विपक्त्रिमं भक्तिरित्युच्यते, नान्यत्। कुतः? संयोगरूपचोदनाख्याविशेषात्। ज्ञाप्यते ह्युपासनस्येव भक्तेरपि मोक्षलक्षणेन फलेन संयोगः। यथा—* न संदृशे तिष्ठति

रूपमस्य न चक्षुपा पश्यति कश्चनैनम्। हृदा मनीषा मनसाऽभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति ॥ [तै. ना. १-१०] इति। हृदिति भक्तिः, श्रुत्यन्तरेण स्मृतिमिश्च; * न संदृशे तिष्ठतीत्युपक्रम्य * भक्त्या च धृत्या च समाहितात्मा ज्ञानस्वरूपं परिपश्यतीह [भा. मो.] इति हृच्छब्दस्थाने भक्तिपदप्रयोगात्। यथा च * पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया [गी. ८-२२] * भक्त्या त्वनन्यया शक्यः * [गी. ११-५४] * भक्त्या मामभिजानाति। [गी. १८-५५] भक्त्याऽविच्छिन्नया मुक्तिः इत्याङ्गिरसस्मृतौ। वैष्णवे धर्मे * परमात्मनि गोविन्दे भक्तिरव्यभिचारिणी। प्रयच्छति नृणां मुक्तिं मा तेऽभूदत्र संशयः ॥ * ये त्वां देवं ध्रुवं भक्ताः पुराणं पुरुषोत्तमम्। प्राप्नुवन्ति सदा कामानिह लोके परत्र च॥ अमोघास्ते भविष्यन्ति भक्तिमन्तश्च ये नराः॥ इति श्रीमति रामायणे [यु. १२०-३०] । श्रीवामने * येषां विष्णुः प्रियो नित्यं ये विष्णोः सततं प्रियाः। न ते पुनः संभवन्ति तद्भक्तास्तत्परायणाः ॥ इति। रूपं चोभयत्र पुण्डरीकाक्षं ब्रह्मैव। चोदना चोपास्स्व भजस्वेति। उपास्तिभजती हि सेवाविशेषविषयौ। अत एव नैघण्टुकाः * सेवा भक्तिरुपास्तिरिति। लैङ्गमार्कण्डेययोः— * भज इत्येष धातुर्वै सेवायां परिकीर्तितः। तस्मात्सेवा बुधैः प्रोक्ता भक्तिशब्देन भूयसी ॥ [लैङ्गे. २९] इति। उपास्यस्य भगवतो निरवद्यमहागुणत्वान्निस्सीमप्रीतिरूपं निर्व्याजस्वाम्याद्दास्यैकरुचिगर्भं चेदमेवोपासनं विविच्यन् इति भक्तित्वव्यपदेशः। एवंविधं प्रियत्वमाश्रित्य हि

* प्रियो हि ज्ञानिनोऽत्यर्थम् [गी. ७. १७] * भजतां प्रीतिपूर्वकम् [,, १०-१०] तुष्यन्ति च रमन्ति च [,, १०-९] * नाथ योनिसहस्रेषु, * या प्रीतिरविवेकानाम् [वि. १. २०. १८, १९.] इति श्लोकद्वयम्, * तत्स्मृत्याह्लादसंस्थितः [वि. १. १७. ३९] * तन्नामस्मरणोद्भूतपुलको दितिपुङ्गव इति । श्रीविष्णुतत्त्वे * सेवा भक्तिस्समाख्याता ज्ञानवासनया कृता । उत्पन्नायां ततस्तस्यां स्नेहभावः स्वयं भवेत् ॥ इति । * परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि । सर्वेषणाविनिर्मुक्तस्स भैक्षं भोक्तुमर्हति [वा-स्मृतौ] इति । * स नो देवः शुभया स्मृत्या संयुनक्तु [तै.ना. ६-१०-२३] इत्याद्युपासनविधिषु वचनानि प्रवृत्तानि ॥

दास्यैकरुचिगर्भज्ञापकानि च * मामनुस्मरन् [गी. ८-१३] * पार्थानुचिन्तयन् [,, -८] * कृष्णानुस्मरणं परम् [वि. २-६-९] इत्यादीनि । अनुरित्ययं निहीनार्थो हि ज्ञाप्यते तज्ज्ञैः । निहीनत्वं चास्य स्वाभाविकं दास्यम्, तदनुसन्धानगर्भमुपासनमनुस्मरणम् । भक्तेश्च कीर्तनादिशरीरत्वं *सततं कीर्तयन्तः [गी. ९-१४] *मन्मना भव[,, -३४] इत्यादौ व्यक्तम् । अस्या एव सकलशास्त्रार्थसारत्वेन परमगुह्यतमत्वं च । *इदं तु ते गुह्यतमम्[गी.९-१]*यज्ज्ञात्वा नेह भूयोऽन्यत् [गी.७-२] * सर्वगुह्यतमं भूयः [,, १८-६४] इत्यादौ दर्शितम् । अलं प्रसज्य ।

हन्त ! इयं भक्तिः * बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते [गी. ७-१९] * जन्मान्तरसहस्रेषु [वि. ध. ६९] इत्यादिप्रकारेण बहुतरजन्मार्जितसुकृतपरिपक्वकषायाणां दीर्घकालनैरन्तर्यसेविता दृढभूमिर्भवतीति । शास्त्रीयसर्वोपायदरिद्राणां प्राणिनां का गतिरिति भयमपनेतुं लघूपायं दर्शयन् स्तुवन्तः कमिति तृतीयं प्रश्नं प्रतिवक्ति तमेवेत्यादि सर्वभूतभयोद्भवमित्यन्तेन ।

अस्यैव सर्वतोमुखं स्तुतियोग्यत्वमभिप्रयंस्तदपेक्षयाऽऽपेक्षिकक्षुद्र-

देशातान्तरादिव्यावर्तकैः अनादिनिधनत्वादिभिर्दशभिर्विशिनष्टि—

अनादिनिधनं विष्णुं सर्वलोकमहेश्वरम् ।
लोकाध्यक्षं स्तुवन्नित्यं सर्वदुःखातिगो भवेत् ॥ ६ ॥
ब्रह्मण्यं सर्वधर्मज्ञं लोकानां कीर्तिवर्धनम् ।
लोकनाथं महद्भूतं सर्वभूतभवोद्भवम् ॥ ७ ॥

अनादिनिधनम्— तस्मादकालोपाधिकमुपकारिणम् । विष्णुम्-अदेशोपाधिकम् । सर्वलोकमहेश्वरम् स्तोतृमनोरथपूरणपर्याप्तमहाविभूतिकम् । लोकाध्यक्षम्— तदुचितनिरुपाधिकानुसन्धानम् । ब्रह्मण्यम् ब्रह्मणेऽनन्तशाखाय वेदाय प्रतिपाद्यतया हितम् ; अत एवोद्घाटितस्तुति-विषयम् । सर्वधर्मज्ञम्—अत एव स्वस्तुतिपरमधर्मज्ञम् । लोकानां कीर्ति-वर्धनम्—सर्वलोकाश्रयिणां स्तोतृप्रभृतीनामात्मन इव * यं स्तुवन् स्तव्यतामेति [वि.ध.७५] इति प्रकारेणाशेषलोकवेदप्रशस्यकीर्तिकारिणम् । लोकनाथम्—लोकानां स्वामिनम् ; अतः स्तुत्यादिसर्वपरिचरणार्हम् । महद्भूतम्—ऐश्वरेण परममहत्त्वेन स्वरूपानुबन्धिना युक्तम् ; अतोऽक्लेशेन स्तोत्रमात्रेण स्वाराध्यम् । महान्तो हि स्वानुग्रहसंवादसूचनमात्रेण हृष्टाः न बहु वाञ्छन्ति । यथोद्योगे * अन्यत्पूर्णादपां कुम्भादन्यत्पादावनेजनात् । अन्यत्कुशलसंप्रश्नान्न चेच्छति जनार्दनः ॥ [भा. उ. ८९] इति । सर्वभूतभवोद्भवम्—असद्व्यावृत्तानां सत्ताहेतुम् ; अतोऽवर्जनीयत्वात्तेषा-मवश्यमनुग्रहीतारम् । एवंभूतं स्तुवन्—परिपूर्णभक्तियोगासंभवेऽपि यथा तथा वाऽपि गुणसङ्कीर्तनं कुर्वन् । सर्वदुःखातिगो भवेत्—तापत्रयदवद-हनमतीत्य निरतिशयानन्दशीतलह्रदं भगवन्तं गच्छेत् ।

अस्य च युक्तं लघुतरस्तुतिमात्रविषयत्वं ध्यायंस्तुवन्नमस्यंश्चेत्यनन्तरोक्तध्यानादिसहचरगुरुतरस्तवनवैलक्षण्यप्रतीतेः; अन्यथा पुन-

-शक्तिप्रसङ्गात् , स्तुवन्तः कमिति स्वतन्त्रप्रश्नान्तरप्रयुक्तत्वात् , अनेकशास्त्रान्तरसङ्गतत्वाच्चावगम्यते ॥ ६,७ ॥

को धर्म इति पञ्चमं प्रश्नं परिहरति—

**एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः ।**
**यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरस्सदा ॥ ८ ॥**

एष म इति । एषः— अनन्तरोक्तो भगवदर्चनस्तवनादिरूपो यथाधिकारं गुरुलघुभावेन व्यवस्थितः । सर्वधर्माणां मध्ये अधिकतमो मतः । धर्मा ऐहिकाःपशुपुत्राद्यर्थाः, आमुष्मिकाः स्वर्गाद्यर्थाः , असङ्गैर्भगवदाराधनबोधानुष्ठितेष्टापूर्तपरिकर्मिततत्त्वज्ञानसमाधिशरीरो मोक्षार्थः सानुरागभगवत्स्मरणकीर्तनप्रणामादिः,तदसाधारणपरिचरणात्मा चेति चतुर्विधाः । तत्र अधिकतम इति तमपा त्रिभ्यश्चतुर्थमुत्कर्षयति । तदुपपादयति—यद्भक्त्येति । यस्मात् भक्त्यादिगुणवान् तस्मादधिकतम इति । भक्त्येत्यनुष्ठानसमयेऽपि प्रीतिगर्भत्वेन सुखोपादानत्वपरम् । गीतं हि * सुसुखं कर्तुम् [गी. ९-२] इति । युक्तं चैतत् प्रियतमपतिस्मरणं प्रियंकरमिति । अनेनास्वामिषु देवतान्तरेषु कषायपानवद्विरसत्वेऽपि हितबुद्ध्या अनुष्ठीयमानेभ्यो व्यावृत्तिः क्रियते । पुण्डरीकाक्षमिति विषयाभिरूप्येण विकृतभयंकरतत्त्वान्तरभजनेभ्यो व्यावृत्तिः । स्तवैरिति वाङ्मात्रसाध्यत्वेन विश्वजिच्चान्द्रायणादिभ्यो व्ययायासबहुलेभ्यो व्यावृत्तिः । तथा हि भगवान् व्यासः * आर्ता विषण्णाः शिथिलाश्च भीताः घोरेषु च व्याधिषु वर्तमानाः । सङ्कीर्त्य नारायणशब्दमात्रं विमुक्तदुःखास्सुखिनो भवन्ति ॥ इति । श्रीविष्णुपुराणे * अवशेनापि यन्नाम्नीत्यादि (६.८.१९)। वैष्णवे धर्मे * अज्ञानतो ज्ञानतो वा वासुदेवस्य कीर्तनात् । तत्सर्वं विलयं याति तोयस्थं लवणं यथा ॥ * शमायालं जलं वह्नेस्तमसो भास्करोदयः । शान्तिः कलेरघौघस्य नामसङ्कीर्तनं हरेः ॥

[वि.ध. ६९-७०] * यन्नामसङ्कीर्तनतो विमुच्यते, [,, ४३] यन्नामसङ्कीर्तनतो महाभयात् विमोक्षमाप्नोति, [,, ४३-२५] * सकृदुच्चरितं येन हरिरित्यक्षरद्वयम्। बद्धः परिकरस्तेन मोक्षाय गमनं प्रति ॥ [,, ७०] * यस्य नाम्नि स्मृते मर्त्यः समुत्क्रान्तेरनन्तरम्। प्राप्नोति वैष्णवं स्थानं पुनरावृत्तिवर्जितम् ॥. [,,] * अच्युतानन्तगोविन्दनामोच्चारणभेषजात्। नश्यन्ति सकला रोगाः सत्यं सत्यं वदाम्यहम् ॥ [,, २९] इत्यादि ॥

अन्यत्र च, * संकीर्तयेज्जगन्नाथं वेदं वाऽपि समीरयेदिति च। वैष्णवे सूक्ते* आस्य जानन्तो नामचिद्विवक्तन, *ध्रुवासो अस्य कीरयो जनासः। अस्य कीरयः - कीर्तयितारः, ध्रुवासः - अपुनरावर्तिनो भवन्ति। अर्चेदिति, अस्य धर्मस्य पुरुषविशेषसमाराधनरूपतामनतिपरोक्षां हि सूचयति। गीतं च *प्रत्यक्षावगमम् [९-२] इति। न ह्यस्य तपस्तीर्थादिवत् पुरुपप्रीणनत्वं शास्त्रास्तिक्यैकसाध्यम्। नर इति प्रायेण सर्वचेतनानां यथासंभवमधिकारं सूचयति। एकवचनं च महायागादिबहुसहकारिनैरपेक्ष्यपरम्। निम्नगुणवृत्तजन्मनामपि भक्त्यभिरुचिमात्रमहागुणेनाकुतोभयं भजनीयो हि भगवान्।

अथ क्षिप्रमेव भागीरथीप्रवाहेनेव निर्णिक्तकल्मषरुचिः परमधार्मिको भवतीति गीयते। गुणविषये तावत् *समोऽहं सर्वभूतेषु (गी. ९-२९), वृत्तविषयेषु च * अपि चेत्सुदुराचारः। ( ,, -३०), जन्मविषयेऽपि * मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ( ,, -३२) इत्यादि।

न चैतावता दुराचारादेर्धर्मत्वम्। * नाविरतो दुश्चरितान्नाशान्तो नासमाहितः (कठो. २-२४) * अप्राप्यः केशवो राजन्निन्द्रियैः रजितैर्नृणामित्येवंप्रकारवचनेभ्यः तस्य भगवदनिष्टत्वेनाधर्मत्वावगमात्। अत एवानन्तरमाह * क्षिप्रं भवति धर्मात्मा (गी. ९-३१) इति। सर्वाश्रमिणामनाश्रमिणश्च विधुरादेः *शमदमाद्युपेतस्स्यात्, अन्तरा चापि तु तद्दृष्टेः

[३-४-२७, ३६] इत्यादीनि ब्रह्मसूत्राण्यधिकारं निरणैषत । युक्तश्चैषः सर्वावस्थेनापि पुरुषेण मातुरिव पुत्रेण परमवत्सलस्य सर्वबन्धोर्निसर्गसुहृदश्च भगवतो नामग्रहणादावप्रतिषेधः; दृष्टश्च गजेन्द्रगृध्रराजवायसरावणावरजकौसलनागरजानपदवल्लवीमालाकारप्रमुखेषु । अपशूद्राधिकरणे त्वत्रैवर्णिकानामनग्निविद्यत्वादग्निविद्याङ्गेषु गुरूपसदनाद्यौपनिषदसंस्काराभावेन वेदान्तवेद्यपरविद्योपार्जने च अनुपायत्वादनधिकारो राद्धान्तितः । तदीया भगवत्समाश्रयणाधिकारव्यवस्था त्रैवर्णिकानां समुद्रिक्तसत्त्वतया मुमुक्षूणामविप्रतिपत्तिः श्रवणमननाद्यौपनिषदब्रह्मविद्यामहापथे न प्रसिद्धोऽधिकारः । तेष्वेव रजस्तमस्संभेदसितासितसत्त्वतया फलकामतया विप्रलब्धानां तादृशो यथायोगमुपासनेषु स्त्रीशूद्रतिरश्चां च प्राचीनभवपरंपराप्रचितसंस्कारपटिम्ना सुप्तप्रबुद्धन्यायेन प्रत्युत्पन्नज्ञानानां विदुरधर्मव्याधप्रभृतीनां प्रारब्धकर्मानुशयलेशानृण्यानुज्ञातजुगुप्सितजातिसंसर्गाणामपि तत्तज्जात्यप्रतिषिद्धसामान्यधर्माङ्गकेषूपासनेषु दुर्वारोऽधिकारः, अनुत्पाद्यविद्यत्वात् । न्यदर्शि च भगवता शौनकेन—* धर्मव्याधादयोऽप्यन्ये पूर्वाभ्यासाज्जुगुप्सिते । वर्णावरत्वे संप्राप्तास्संसिद्धिं श्रमणी यथा ॥ (वि.ध.१००) इति॥

अनुत्पन्नज्ञानानामपि क्रमभाविन्या मुख्यभक्तेरुपक्रमभूतस्मरणसङ्कीर्तनश्रवणादिरप्रतिषिद्धः । धर्मस्मर्तारोऽपि हि अहिंसासत्यशौचपरोपकारमातापितृशुश्रूषणश्रेष्ठदेवतानुकूल्यादिकं सामान्यधर्ममाचण्डालमनुमन्यन्ते । स्वयं सङ्कीर्तननिषेधेऽपि कीर्तयितृपुरुषानुवर्तनानुमोदनमर्पणाविरोधमात्रेण सुदूरेऽपि संबन्धसंभवः । स्मर्यते हि— * धर्मःश्रुतो वा दृष्टो वा कथितो वा कृतोऽपि वा । अनुमोदितो वा राजेन्द्र पुनाति पुरुषं सदा ॥ [भा.आश्व.९४. २९] इति * प्रयोजयिताऽनुमन्ता कर्ता इति च विशेषतो भगवद्धर्मस्य स्पर्शवेधित्वम् । * उद्घोषितः पूजितो वा दृष्टो वा नमितोऽपि वा । प्रसह्य हरते पापं को न सेवेद्धरिं ततः ॥ * कीर्तितः संस्मृतो ध्यातः पूजितः संस्कृतस्तथा । ऐहिकामुष्मिकीं रक्षां करोति

भगवान् हरिः ॥ * शृण्वन्ति ये वै पठतस्तथाऽन्ये पश्यन्ति ये मामीरयन्ति [वि. ध. ९४] इत्यादि । अपि च इतिहासपुराणादिषु श्वपाकादेरपि भगवद्भजनानुमतिः । वैष्णवे धर्मे- *नम इत्येव यो ब्रूयात् मद्भक्तः श्रद्धयाऽन्वितः । तस्याक्षयो भवेल्लोकः श्वपाकस्यापि नारद ॥ [७०] इत्यादि वचनानि तद्बहुमन्तव्यत्वनिःश्रेयसप्राप्त्यादिवृत्तान्ताश्च सालम्बनाः । एवं न किंचिदपि शास्त्रं कुप्येत्, व्यवस्थितविषयत्वात् ।

सदेति कालविशेषानपेक्षत्वम्, देशशौचादिविशेषानपेक्षाया अपि प्रदर्शनमेतत् । तेन अयनर्तुमासपक्षनक्षत्रमुहूर्तविशेषसव्यपेक्षेभ्यः प्रकर्षः । अत्र च, * चक्रायुधस्य नामानि सदा सर्वत्र कीर्तयेत् । नाशौचं कीर्तने तस्य पवित्रं भगवान् हरिः ॥ (वि. ध.) * प्रातर्देवेति कृष्णेति गोविन्देति च जल्पताम् । मन्याह्ने चापराह्णे च योऽवसादः स उच्यताम् ॥ [ ,, ८९-७७] इत्येतानि ऋषिवचनानि द्रष्टव्यानि । न हि भगवतः प्रयताप्रयताधिकारिसंसर्गादुपघातः तच्छौचादिसहकारिविरहात् तदनुग्रहासामर्थ्यं वा; प्रत्युत स्वसंबन्धायोग्यमपि पुनानः स्वोचितं विधाय स्वीकरोति, परमपावनत्वात् । अतो हीदमुदीर्यते— * नाशौचं कीर्तने इत्यादि । सदसदधिकारितारतम्यशास्त्राणि तूच्चावचानामधिकारिणां परस्परसङ्करेण धर्मसंप्लवो मा प्रसाङ्क्षीदिति । स्वरूपतोऽल्पीयानपि संकीर्तनादिः फलतो महीयान् । यदाह—* स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् [गी. २-४०] इति । न चास्य धर्मान्तरवदभिक्रमनाशः *नेहाभिक्रमनाशोऽस्ति [ ,, ] इति वचनात् । * न मे भक्तः प्रणश्यति [गी. ९. ३१] * यं प्रणम्य न सीदति, [वि. ध. ९७] * न वासुदेवं प्रणिपत्य सीदति, [ ,, ७०] * जनार्दनं प्रणिपतितो न सीदति । न चायथाविध्यनुष्ठानात् प्रबलप्रतिपक्षाद्वा प्रत्यवायः । *प्रत्यवायो न विद्यते [गी.२.४०.]इति । न चैतेषामर्थवादत्वं शक्यशङ्कम्; अनतिवादित्वात्॥

इह भगवत्तत्त्वज्ञानभक्तिप्रतिबन्धकपापनिर्हरणसत्त्वसमृद्ध्यादि-

क्रमेण तत्प्राप्त्युपक्रम उच्यते । *बद्धः परिकरस्तेन मोक्षाय गमनं प्रति- [वि. ध. ७०] * यस्मिन् न्यस्तमतिर्न याति नरकं स्वर्गोऽपि यच्चिन्तने विघ्नो यत्र निवेशितात्ममनसो ब्राह्मोऽपि लोकोऽल्पकः । मुक्तिं चेतसि यः स्थितोऽमलधियां पुंसां ददात्यव्ययः किं चित्रं यदघं प्रयाति विलयं तत्राच्युते कीर्तिते ॥ इत्यादौ च । न चैषः पूर्णाहुतिन्यायस्यविषयः; तस्यातिवादविषयत्वात्, सङ्कीर्तनादिप्रकरणेषु प्रायेण वाक्यशेषत्वप्रार्थनाप्रर्थ वादलिङ्गादर्शनाच्च । किञ्च, प्रबलप्रमाणविरोधाभावे अर्थवादपदानामपि स्वतः प्रामाण्यतः स्वार्थपरित्यागश्च साहसम्; अन्याय्यत्वात् ।

ननु, गुरुदीर्घदुष्करतपस्समाधिविशेषरूपमहाधर्मसाध्यतत्त्वज्ञानोपक्रमस्य वाङ्मात्रसाध्यत्ववादोऽप्यतिवादः, गुरुशास्त्रवैयर्थ्यप्रसङ्गेन प्रमाण विरुद्धं च । तदिदमविदितभगवत्प्रभावस्य च्छान्दसस्य पैशाचम् । लघीयोऽपि भगवत्सङ्कीर्तनं दुर्वहामपि धुरं धारयत्येव । न गुरुशास्त्रानर्थक्यम्, तस्य समर्थाधिकारत्वात् । अस्य तु सत्यसति वा सामर्थ्ये भगवदसाधारणरुचिसमुचितगारवदधिकारत्वाच्च । गरीयसोऽपि भगवत्प्रसाद एव फलहेतुः लघीयसि किं दण्डवारितः ? यथा च गरीयसि प्रयोगवैपुल्याद्देवः प्रसीदति, तथा लघीयस्यपि भावशुद्धिविशेषात् प्रसीदेत् ।

यथोक्तं—* सम्यग्व्यवसितो हि सः [गी. ९. ३०] * पत्रं पुष्पं फलं तोयम् [ ,, २६] * यो न वित्तैर्न विभवैर्न वासोभिर्न भूषणैः । तोष्यते हृदयेनैव कस्तमीशं न पूजयेत् ॥ [वि. ध. ८९. ७०] व्यासस्मृतौ * दद्यात्पुरुषसूक्तेन यः पुष्पाण्यप एव वा । अर्चितं स्याज्जगदिदं तेन सर्वं चराचरम् ॥ वैष्णवे धर्मे * पृथिवीं रत्नसंपूर्णां यः कृष्णाय प्रयच्छति । तस्याप्यन्यमनस्कस्य सुलभो न जनार्दनः [७४] ॥ इत्यादि ।

भावभेद एव हि धर्माधर्मनिदानं, न क्रियाविशेषः । यथा श्री विस्णुतत्त्वे .* भावशुद्धिर्मनुष्याणां प्रमाणं सर्ववस्तुषु । अन्यथाऽऽलि-

भावोपहृतानि कल्कः गतरस



ज्यते कान्ता स्नेहेन दुहिताऽन्यथा ॥ तथा * तपो न कल्कोऽध्ययनं न कल्कः स्वाभाविको वेदविधिर्न कल्कः । प्रसह्य वित्ताहरणं न कल्कस्तान्येव भावोपहृतानि कल्कः ॥ [भा.आदि.१.२७९]अन्यत्र *गङ्गादितीर्थेषु वसन्ति मत्स्या देवालये पक्षिसङ्घाश्च नित्यम् । भावोज्झितास्ते न फलं लभन्ते तीर्थानि पुण्यायतनाश्च मुख्याः ॥ इति ।

उपपन्नं चैतत् सर्वज्ञस्यावाप्तसमस्तकामस्यानपेक्षस्य भगवतो भावशुद्ध्याराध्यत्वं न द्रविणकणार्पणादिना । * याथातथ्येन पण्डितः इति न्यायात् देशकालसहकार्यादिवैकल्येऽपि स्वल्पादपि समग्रादिव देवः प्रसीदेत् । तदुक्तं—* ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्चयन् । यदाप्नोति तदाप्नोति कलौ सङ्कीर्त्य केशवम् ॥ [वि. पु. ६.२.१७.] इति । तथा—* विनिन्द्यां प्रथमे पादे करिष्यन्ति हरेर्नराः । युगान्ते च हरेर्नाम नैव कश्चिद्ग्रहिष्यति ॥ धन्यास्तं पुरुषव्याघ्र भवाम्भोधावमानिनः । यत्नेनापि कलौ विष्णोर्ग्रहिष्यन्त्यक्षयात्मनः ॥ (वि. ध. १०८)। युज्यते चैतत्। सुशीलो हि नृपतिः पितराविव कृच्छ्रेषु किञ्चिन्न्यायवृत्तमपि बहूपकारिणमिवानुगृह्णीते। अत एव दैवपित्र्यप्रायश्चित्तादिषु देशकालोपपत्त्यादिवशेनातिनिम्नोन्नतानामपि प्रयोगाणां तुल्यकक्ष्यत्वेन विधिः, शिष्टैस्तथाऽनुष्ठानं च । अत एव यथा सर्वस्वसाध्यप्रयोगविस्तारस्य स्थाने स्वानुपपत्तिख्यापनमेव आपदि श्राद्धप्रत्याम्नानम्, यथा वा तत्तत्कर्मदोषक्षये तत्तन्मन्त्रजपः इत्यादि ।

तदेवं प्रियतमविषयतया सुखक्रियत्वात्, व्ययायासरहिततया सुकरत्वात्, अनतिपरोक्षात्मनाथप्रीणनभावेनाकर्षकत्वात्, अतिलाघवेऽप्यतिगुरुदुर्वहभवभयोन्मूलनमहाफलत्वात्, अप्रत्यवायवत्त्वात्, सुभिक्षाधिकारितया विश्वजनीनत्वात्, देशकालदशाविशेषादिविक्षेपवर्जनेन निर्व्याजत्वात्, विषयप्रभावेन निष्प्रत्यूहत्वाच्चेत्येवंप्रकारेभ्यो हेतुभ्यो भगवदसाधारणसङ्कीर्तनादिधर्मः अधिकतमः भीष्ममतः । अन्येषामपि परमर्षीणां

* सर्वेषामपि धर्माणामुत्तमो वैष्णवो विधिः, * रक्षते भगवान् विष्णुः भक्तानात्मशरीरवत् , * गोविन्दभक्तश्चभ्यधिकं श्रेयश्चान्यन्न विद्यते [वि. ध.] इत्यादिरुदाहार्यः ॥ ८ ॥

परमं यो महत्तेजः परमं यो महत्तपः ।
परमं यो महद्ब्रह्म परमं यः परायणम् ॥ ९ ॥

पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम् ।

अथोपेयप्रश्नं प्रतिवदन् श्रीमन्नामसहस्रश्रवणाय धर्मराजो नियुज्यते परमं यः इति चतुर्भिः । तत्र प्रथमेन सार्धेन किं वाप्येकं परायणमिति द्वितीयं प्रत्याह । तेज आदिभिः नपुंसकलिङ्गैः यः इति समभिव्याहारेण लिङ्गवैरूप्यं न शङ्क्यम् । लिङ्गसंख्याभ्यां पूर्वं विशेपितस्य पदस्य पदान्तरसमभिव्याहारात् तल्लिङ्गसंख्याविशेषेणाविशेष्यत्वाच्च विशेष्यस्य, * वेदाः प्रमाणम् (वि. ध. ७९) * तत्त्वं नारायणः परः (तै. ना.) इतिवत् ।

सर्वथा स्पृहणीयतमत्वेन परमपुरुषार्थख्यापकानि परमतेजस्त्वादीनि षड्विशेषणानि । तेजः—स्वभावत एव भास्वरम् , अन्यावभासकञ्च । * परं ज्योतिरुपसंपद्य (छा. ८-१२) * तस्यादित्यो भामुपयुज्य भाति इति भास्वरत्वस्य निस्सीमत्वम् । महदिति परमिति च समातिशाय्यसंभवः । एवमुत्तरत्रापि यथाविशेष्यम् । ईष्टे सर्वस्येति तपः । यथा * यो देवेभ्य आतपति (आर.३-१२) * तमीश्वराणां परमं महेश्वरम्

(श्वे. ६) * एष सर्वेश्वरः (बृ. ६-४-२२) इत्यादि। अनवच्छिन्न-कल्याणस्वरूपगुणत्वेन बृहत्त्वात्, सर्वशक्तित्वेन सर्वबृंहणत्वाच्च ब्रह्म। पवित्राणां मध्ये परमं महत् पवित्रम्; पवित्रं-शुद्धिविशेषहेतुः। शुद्धिश्च दोषविशेषनिर्मोकः। दोषश्च रजस्तमःप्रायपरिणामभेदास्पदत्वमचेतनस्य; चेतनस्य तु तत्परिरम्भसंभवः। अविद्या भगवदपराधरागद्वेषादिः। तं भगवानेव समूलकाषं कषति। तस्यैव सर्वथा तद्विरोधिस्वभावत्वात्।

क्रोशन्ति च शास्त्राणि—* एतं ह वाव न तपति (तै.आ. ९) * तद्यथा पुष्करपलाश आपो न श्लिष्यन्ते (छा. ४-१४-३) * तद्यथेषीकतूलमग्नौ प्रोतं प्रदूयेत (छा.५-२४-३) * तत्सुकृतदुष्कृते धूनुते [कौषी.१-४] * तदा विद्वान् पुण्यपापे विधूय (मु.३-१-३) * क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता (याज्ञ. स्मृ. ३४) * ध्याये-न्नारायणं देवं स्नानादिषु च कर्मसु। प्रायश्चित्तिर्हि सर्वस्य दुष्कृतस्येति वै श्रुतिः॥ * यो मामजमनादिं च (गी.१०. ३.) * पावनः सर्वलोकानां त्वमेव रघुनन्दन (रा.उ.८२) * प्रायश्चित्तान्यशेषाणि (वि. २-६-३९) इत्यादि। प्रायश्चित्तप्रकरणं कात्स्न्येन। * यथाग्निरुद्धतशिखः कक्षं दहति सानिलः। तथा चित्तस्थितो विष्णुर्योगिनां सर्वकिल्बिषम्॥ इति। (वि. पु. ६-७-७४)

अन्यस्यापि तीर्थादेः पवित्रत्वं तत्संश्लेषायत्तं दर्शयति परमं महत् इति विशेषणाभ्याम्। न खलु स्वभावमलिनानां चेतनानां तदुपहतानां देवा-दीनां स्वसदृशवस्त्वन्तरशोधकत्वं युक्तिमत्। अत एव पराशरशौनकादिभिः

शुभाश्रयप्रकरणादिषु तत्संशीलनं निषिध्यते । * अशुद्धास्ते समस्तास्तु देवाद्याः कर्मयोनयः (वि. ६-७-७७) * आब्रह्मस्तम्बपर्यन्ताः जगदन्तर्व्यवस्थिताः । प्राणिनः कर्मजनित [ाः] संसारवशवर्तिनः॥ (वि.ध.७४) इत्यादिषु-। तत्र देवतानां पावनत्वं तदुपासनार्चनपादोदकसेवादिना प्रसिद्धम् ; तीर्थायतनादेः तत्सामीप्यात् । यथा गङ्गायाः वैष्णवे * विष्णुवामपदाङ्गुष्ठविनिस्सृतस्य जलस्यैतन्माहात्म्यम् (वि.पु. ४-४-३०) इति ; * विष्णोरायतनं ह्यापः स ह्यपांपतिरुच्यते इति जलमात्रस्य च । कालस्य च तदवतारतद्दैवत्यतच्छयनोत्थानवत्त्वात् द्वादशीजयन्तीश्रवणादिवत् तत्संबन्धात् । आत्मगुणानां शमादीनां तज्ज्ञानानुगुण्यात् । क्रियाणां च यज्ञदानतपःश्राद्धप्रभृतीनां तदाराधनत्वात् । ब्राह्मणादिजातेः तत्परवेदाध्ययनादौ साक्षादधिकारात् । यथा * विष्णुं क्रान्तं वासुदेवं विजानन् विप्रो विप्रत्वमाप्नुयात् तत्त्वदर्शी इति । श्रुतिस्मृत्यादेः तत्परत्वात् तच्छासनत्वाच्च * नारायणपरा वेदाः (भाग. २-५-१५) * श्रुतिस्मृती ममैवाज्ञा [वि. ध.] इति । आरण्यके तीर्थयात्रायां * पुण्या द्वारवतीत्युपक्रम्य * आस्ते हरिरचिन्त्यात्मा तत्रैव मधुसूदनः । तत्पुण्यं तत्परं ब्रह्म तत्तीर्थं तत्तपोवनम् ॥ [भा. वन.] इति तत्संबन्धहेतुकं देशस्य पावनत्वमभिधाय * पवित्राणां हि गोविन्दः पवित्रं परमुच्यते । पुण्यानामपि पुण्योऽसौ इत्येवमेव स्पष्टं निगम्यते ॥

सुरभिस्रगङ्गरागसुरसुन्दरीसुधारसादिभ्यो निरस्तसमस्तसंसारनिर्मलनिर्मर्यादस्वरससंविदानन्दसान्द्रात् प्रत्यगात्मनश्चात्यन्तमभिलषणी-

यत्वात् मङ्गलानां च मङ्गलम् । अतः परमं यः परायणम्—प्राप्यम् । प्रपञ्चयिष्यते चैतत् ॥

यः एवं सः परमं परायणमिति विधाय प्रतिवक्तव्ये यः परायणमिति सिद्धवदनुवादः शास्त्रप्रसिद्ध्यतिशयप्रदर्शनार्थः ॥ ९ ॥

दैवतं देवतानां च भूतानां योऽव्ययः पिता ॥ १० ॥

यतः सर्वाणि भूतानि भवन्त्यादियुगागमे ।
यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये ॥ ११ ॥

अथ किमेकं दैवतम् इति प्रथमं प्रश्नं प्रतिब्रूते—दैवतमिति सार्धेन । स एव देवतानां विधिशिवशतमखादीनां महादैवतं तत्त्वम् । कुतः ? तेषामेव भूतानां सद्भावभाजां पिता यतस्तस्या-र्वाचीनपितृभ्यो विशेषः अव्ययः इति । न हि तेन सनातनेन पितृमन्तः कदाचिदनाथाः । पितृत्वमुपपादयति यतस्सर्वाणीति । यतः निमित्तकारणात् । सर्वाणि द्रुहिणद्रुमावधीनि । भूतानि भवन्ति जायन्ते । यद्यपि ब्रह्मसर्गादुपरि अवान्तरसर्गे च ब्रह्मादिमुखेन सृजति, अथापि प्रथमसृष्टौ न तथेति सूचयति आदियुगागम इति ।

उपादानकारणमपि तमेवाह । अन्तिमे युगक्षये पुनः यस्मिन्नेव तानि प्रलयं यान्ति प्रलीयन्ते । लयः खलूपादान एव कार्यस्य, यथोर्ण-नाभितन्त्वादेर्लालादौ । स्थितिप्रवृत्त्यादिहेतुत्वं सहकारिकारणत्वं च चक्रा-

रेण द्योत्यते । एवं लक्षणकं हि परतत्त्वं श्रूयते * यतोवा इमानि (तै. भृ. १) इत्यादौ । सूत्र्यते च * जन्माद्यस्य यतः इति । अस्य चैव त्रिविधकारणत्वं च * ब्रह्मवनं ब्रह्म सवृक्ष आसीत् (२ अष्ट-८-७) इत्युदाहृत्य * प्रकृतिश्च प्रतिज्ञादृष्टान्तानुरोधात् (ब्र. १-४-२३) इत्यधिकरणे निरणायि । एतेन * उपादानं तु भगवान् निमित्तं तु महेश्वरः इति कारणभेदेनानभिमतमहेश्वरवादो न वैदिकः । न च जगदुपादानत्वात् भगवति विकारादिदोषप्रसक्तिः । स्वशरीरतया परिगृहीतप्रकृत्याद्येकदेशद्वारकत्वं परिणामादेरूर्णनाभि-दृष्टान्तावष्टम्भेनोपपादयन्ती तत्रभवती श्रुतिरेव पर्यहार्षीत् ।

अत्रापि विधातव्ये यो दैवतमित्यनुवादः शास्त्रप्रसिद्धिप्रदर्शनपरः । तथा हि उपनिषदादिषु परतत्वस्य लक्षणतत्वस्थित्युपासनप्राप्तिप्रतिपादनैदं-पर्यपर्यवसायिषु सदसद्ब्रह्माक्षरादिपदैः निरुपपदैः परमाद्युपपदसनाथैश्च सामान्यवाचिभिः निर्दिश्यमानस्य विधिहरिशिवादिविशेषपर्यवसिता-काङ्क्षायां * नारायणपरं ब्रह्म तत्त्वं नारायणः परः * तद्विष्णोः परमं पदम् (कठो. ३-९) * यस्मात्परं नापरमस्ति किंचित् (श्वे). * पुरुषान्नपरं किंचित् (कठो. ३-११) * मत्तः परतरं नान्यत् किंचित् (गी: ७-७) * उत्तमः पुरुषस्त्वन्यः (गी. १५-१७) इत्या-दिभिः कण्ठोक्तिभिः, सृष्टिवाक्यगतिसामान्यात्, तत्त्वपरपुरुषसूक्तोत्तर-नारायणप्रभृतिप्रबलप्रदेशान्तरतात्पर्यात्, सुबालमैत्रायणीयमहोपनिषच्छा-न्दोग्यतैत्तिरीयैतरेयकठवल्लीप्रभृतिबहूपनिषदुद्घोषेण सात्त्विकेतिहासपुराण-

प्राचुर्येण देवतापारमार्थ्यज्ञपराशरपाराशर्यप्राचेतसादिपरमर्षिमतैरस्यैव वेदसिद्धान्तत्वे स्वपरभागमसंप्रतिपत्त्या रूपायुधवाहनचारित्रविशेषादिसामर्थ्यतश्च खलु भगवतो निरङ्कुशैश्वर्यं तदितरनिकर्षश्च बुद्धिमतां स्वध्यवसानम्। दहरवैश्वानराद्यधिकरणैः समन्वयाध्याय एव चैवमध्यवससुरस्मदाचार्या इति नातिविस्तृणीमहे ॥

तथा च संचिक्षिपुर्यामुनाचार्याः, * त्वां शीलरूपचरितै इत्यदिना । तातपादाश्च * तत्त्वार्थतत्परपरश्शतवेदवाक्यैः सामर्थ्यतः स्मृतिभिरप्यथ तादृशीभिः । त्वामेव तत्त्वपरसात्विकसत्पुराणैः दैवज्ञधीभिरपि निश्चिनुमः परेशम् ॥(वै. स्त. १९) * रूपश्रिया परमया परमेण धाम्ना चित्रैश्च कैश्चिदुचितैर्भवतश्चरित्रैः। चिह्नैरनिह्नवपदैरपरैश्च: कैश्चिन्निश्चिन्वते त्वयि विपश्चित ईशितृत्वम् ॥ (वै. स्त. २२) इति ॥

एवं सुनिर्णीतयोः सर्वपरयोः तत्त्वहितयोः सर्वयोग्यं हितविशेषमवधारयन् श्रोतारं निमन्त्रयते तस्येति—

तस्य लोकप्रधानस्य जगन्नाथस्य भूपते ।
विष्णोर्नामसहस्रं मे शृणु पापभयापहम् ॥ १२ ॥

तस्य यथोक्तमहामहिम्नः। लोकप्रधानस्य अशेषशेषिणः। जगन्नाथस्य सर्वनियन्तुः। विष्णोः सम्बन्धिषु सत्स्वपि बहुषु तदावर्जनोपायान्तरेषु, नामसहस्रमेव सर्वपापभयापहम् सर्वप्रकारं पापं तद्धेतुकं भयं च समूलघातं हन्यादित्याशंस[नाद-]नाहं वदत मे मत्तः

मदर्थं वा । शृणु स्वयमेव शृण्वतः पुनः श्रवणनिमन्त्रणं शृणुते इति संबोधनं च वक्तुः श्रोतृलाभमस्मिन् विषये श्लाघ्यं सूचयतः ॥ १२ ॥

अथ वक्तुं प्रतिजानीते यानीति—

यानि नामानि गौणानि विख्यातानि महात्मनः ।
ऋषिभिः परिगीतानि तानि वक्ष्यामि भूतये ॥ १३ ॥

इह चतुष्टयी हि शब्दानां प्रवृत्तिः द्रव्यजातिगुणक्रियाविषयभेदेन । तत्र [अ]द्रव्योपाधित्वेन[ । ]साधारण्येन च[ । ]द्रव्यजातिनिमित्तत्वात् प्रकृष्टगुणकर्मनिमित्तत्वमेव भगवन्नाम्नां ब्रवीति गौणानीति । गुणेभ्यः कर्मभ्यश्च निमित्तभूतेभ्यः आगतानि ; यौगिकानीत्यर्थः । गुणशब्दः कर्मणोऽपि प्रदर्शकः । * [प्रसन्नात्मात्मनो] प्रवदन्नात्मनो नाम्नां निरुक्तं गुणकर्मणाम् (भा. शा.) भगवान् * गौणानि मम नामानि कीर्तितानि च कानिचित् (भा. शा.) *नामकर्मार्थवित्तात (भा.उ.) *निरुक्तं कर्मजानां च शृणुष्व प्रयतोऽनघ (भा. शा.) इत्यादिवचनात् । न चैषां यदृच्छाशब्दत्वम् ; विवक्षितावयवार्थत्वादसाङ्केतिकत्वाच्च ॥ विख्यातानि छन्दोभाषयोः प्रवृत्त्यादीनां प्रयोगभूयस्त्वात् तदसाधारण्येन प्रसिद्धानि ; रूढानीत्यर्थः । योगादिना अर्थान्तरवृत्तिसंभवेऽपि एकत्र नियतत्वं हि नामत्वम् । ऋषिभिः अशेषवेदार्थदर्शिभिः सनकसनत्कुमारनारदप्रभृतिभिः । परिगीतानि एवंरूपाणि एवंनिमित्तानि एतद्वाचकानीति परितः परितो दुग्धधेनुवदभिनिविशमानैः प्रीत्या प्रयुक्तानि

यानि नामानि तेभ्यः एकैकस्मादेकैकं मधुकरक्रमेण समाहृत्य भगवता व्यासेन स्तोत्ररूपेण कीर्तितानि संप्रदायपारम्पर्येणास्मत्पर्यन्तं संप्राप्तानि तुभ्यम् वक्ष्यामि । किमर्थम्? भूतये, भूतिः भवनं सत्ता; अनादि-संसारदृष्टिविनष्टात्मनः पुनरुज्जीवनायेत्यर्थः ॥

श्रूयते ह्येवमात्मनः सदसद्भावौ * असन्नेव स भवति असद्ब्रह्मेति वेद चेत्, अस्ति ब्रह्मेति चेद्वेद, सन्तमेनं ततो विदुः (तै. आ. ६) इति । अपरिमितमाहात्म्यतया अपरिमिताभिज्ञत्वात् भगवतो यद्यपि कृत्स्ननामग्रहणासंभवः * श्रुतमेतस्य देवस्य नामनिर्वचनं शुभम्। यावत्तत्त्वाभिजानेऽहमप्रमेयो हि केशवः ॥ इति प्रकारेण बुभूषतां तु विष्णुनामसहस्रेणात्मलाभो भवतीति ध्वनयति महात्मन इति ।

एवमेषां गुण(कर्म)निमित्तत्वादेतदधिकारिभिः भगवद्गुणतस्करा न व्यवहार्याः । "अस्त्वियं सगुणब्रह्मविद्या अर्वाचीनफलाधिकारिणाम्, निर्गु-णविद्या तु मुमुक्षूणामेव हि" इति चेत्, भित्त्वा बधिरम् यः अस्या एव * मुच्यते जन्तुर्जन्मसंसारबन्धनात् * याति ब्रह्म सनातनम् इत्यु-पायत्वं घुष्यमाणं न शृणोषि । किं च सगुणनिर्गुणे द्वे ब्रह्मणी प्रसज्येयातामित्यद्वैतं विपद्येत । * परमो मत इति * अधिकतमो मत इति सर्वशास्त्रार्थाधिकतरसारसमुद्धारकैप्रयोजनताधिकृतस्यार्वाचीनविषय-त्वोक्तौ कान्यत्रानर्वाचीनसिद्धिरनयोर्विषयोः ॥

सगुणा निर्गुणार्थेति मा च वाचाल वोचथाः ।
न विरुद्धार्थयोर्यस्मादुपायोपेयता द्वयोः ॥

रामदारैव

अपि च निर्गुणस्य किं मूलं गुणप्रतीतेः ? साऽविद्येति चेत् जनिमृतिमोहादिविषमूर्च्छितस्य मुमूर्षोः परमभेषजं ब्रह्मैव अविद्याभ्रमाद्यशेषदोषास्पदमनाघ्रातगुणकणिकं चेति मनोहरमिदं वेदरहस्यम् ।

ब्रह्मदोषो मृषा चेत्ते नैर्गुण्यं च मृषा मतम् ।
नैर्दोष्यसगुणत्वे ते सत्ये स्यातां न चेच्छसि ॥

को वा ब्रह्माविद्यामिमामुपहन्यात् ? अद्वैतविद्यानिष्ठ इति चेत्, इदं ततोऽपि मनोहरम् यत्परं ब्रह्म बंभ्रमीति संसारी तदुत्तारयतीति । अपि च सगुणवाक्यं कस्य हेतोर्निरर्थकम् ? निर्गुणवाक्यबाध्यत्वादिति चेत्, विपरीतं कस्मान्न स्यात् ? सममेव ह्युभयोः प्रामाण्यं विरोधश्च । अन्यच्च गुणाश्चेन्निषेद्धव्याः किं तपस्विन्या गुणश्रुत्या? प्रतिषेध्यगुणप्रसञ्जिका सेति चेत्, मा च भूत् प्रतिषेध्यम् । न ह्यप्रसक्तं प्रसज्य तदेव प्रतिषेधतु शास्त्रमिति काचिल्ललाटपट्टे लिपिः । * प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् (भा. वन.) । न च * पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत् (पू० मी० ६-५-१९) इति सार्वत्रिको न्यायः । न हि प्राक्तनम् इहास्तीति ज्ञानं नास्तीति परस्तात्तनशब्दो हिनस्ति । पवमानापच्छेदे प्राकृतधर्मप्राप्तौ च पूर्वदौर्बल्यम् । पूर्वमनुपमृद्य परस्योत्पत्त्यसंभवात् । इह तु संभवो वक्ष्यते । यदि परत्वात् निर्गुणवचनं गुणांशं निह्नुते, ब्रह्मस्वरूपांशमपि शून्यमेव तत्त्वमिति वाक्यं बाधतां परत्वात् । तद्बुद्धभ्रममूलत्वात् न वैदिकं वस्तु बाधत इति चेत्, न ; वेदोऽपि हि ते ब्रह्मभ्रममूल एवेति को विशेषोऽनयोः ? किं च प्रत्युत

प्रयुतैकमंशं वदेन्न वा देववर प्रसीद ॥ मात्स्ये * यथा रत्नानि जलधेरसं-ख्येयानि पुत्रक । तथा गुणा ह्यनन्तस्य असंख्येया महात्मनः ॥ वैष्णवे धर्मे * नहि तस्य गुणास्सर्वे सर्वैर्मुनिगणैरपि । वक्तुं शक्या वियुक्तस्य सत्त्वाद्यैरखिलैर्गुणैः ॥ इत्यादिभिः । प्रायेण श्रीमद्रामायण-भारताभ्यां च । उपाधिना स्वरूपपरिणामेन वा ब्रह्मैव संसरतीति वादिभ्यां तु ब्रह्मण्यशेषदोषाभ्युपगमात् * पवित्रं मङ्गलं परम् इत्यादीनि नामानि कुप्येयुः । न च * यतो वाचो निवर्तन्ते [तै. आ. ४] इत्यादि ब्रह्मणोऽप्रामाणिकत्वपरम्; तस्य तुच्छत्वप्रसङ्गात्, * यतो वाचः [तै.आ.४] * आनन्दं ब्रह्मणः इत्यादि धर्मनिर्देशविरोधात्, तदा वाच्य-त्वसंनिवृत्तिवचनस्यानुपपत्तेः, ब्रह्मप्रमापकशास्त्रवैयर्थ्यप्रसक्तेः, * अथातो ब्रह्मजिज्ञासेति ब्रह्ममीमांसानारम्भणीयत्वप्रसङ्गात्, * वचसां वाच्यमुत्तमम् [जि] * नावेदविन्मनुते तं बृहन्तम् [काठ. ३-९] * शास्त्रयोनित्वात् [ब्र. १-१-३] इत्यादिवाक्यन्यायव्याकोपप्रसङ्गात्, * सैषाऽऽनन्दस्य मीमांसा भवति इत्युपक्रमेण * ते ये शतम् [तै. आ. ८-१] इत्यादिना चतुर्मुखानन्दानुक्रमसंरम्भविरोधाच्च ।

अतः * प्रकृतैतावत्त्वं हि [ब्र. ३-२-२१] इति सूत्र-न्यायेनानन्देयत्ताराहित्यपरमेव मतम् ॥ व्याजह्रिरे चैवमेतत्तातपादाः * श्रुतिस्त्वानन्दमुखान् हरेर्गुणानियत्तया मातुमिवोद्यता सती । उवाच वाचा मनसा सहोचितां निवृत्तिमेव त्ववधेरसंभवात् ॥ इति । अतः * न यत्र नाथ विद्यन्ते नामजात्यादिकल्पनाः * इत्यपि व्याख्यातम् । किं च,

अपि च निर्गुणस्य किं मूलं गुणप्रतीतेः ? साऽविद्येति चेत् जनिमृतिमोहादिविषमूर्च्छितस्य मुमूर्षोः परमभेषजं ब्रह्मैव अविद्याभ्रमाद्यशेषदोषास्पदमनाघ्रातगुणकणिकं चेति मनोहरमिदं वेदरहस्यम् ।

भ्रमदोषो मृषा चेत्ते नैर्गुण्यं च मृषा मतम् ।
नैर्दोष्यसगुणत्वे ते सत्ये स्यातां न चेच्छसि ॥

को वा ब्रह्मविद्यामिमामुपहन्यात् ? अद्वैतविद्यानिष्ठ इति चेत्, इदं ततोऽपि मनोहरम् यत्परं ब्रह्म बंभ्रमीति संसारी तदुत्तारयतीति । अपि च सगुणवाक्यं कस्य हेतोर्निरर्थकम् ? निर्गुणवाक्यबाध्यत्वादिति चेत्, विपरीतं कस्मान्न स्यात् ? सममेव ह्युभयोः प्रामाण्यं विरोधश्च । अन्यच्च गुणाश्चेन्निषेद्धव्याः किं तपस्विन्या गुणश्रुत्या? प्रतिषेध्यगुणप्रसञ्जिका सेति चेत्, मा च भूत् प्रतिषेध्यम् । न ह्यप्रसक्तं प्रसज्य तदेव प्रतिषेधतु शास्त्रमिति कश्चिल्ललाटपट्टे लिपिः । * प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् (भा. वन.) । न च * पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत् (पू० मी० ६-५-१९) इति सार्वत्रिको न्यायः । न हि प्राक्तनम् इहास्तीति ज्ञानं नास्तीति परस्तात्तनशब्दो हिनस्ति । पवमानापच्छेदे प्राकृतधर्मप्राप्तौ च पूर्वदौर्बल्यम् । पूर्वमनुपमृद्य परस्योत्पत्त्यसंभवात् । इह तु संभवो वक्ष्यते । यदि परत्वात् निर्गुणवचनं गुणांशं निह्नुते, ब्रह्मस्वरूपांशमपि शून्यमेव तत्त्वमिति वाक्यं बाधतां परत्वात् । तद्बुद्धभ्रममूलत्वात् न वैदिकं वस्तु बाधत इति चेत्, न ; वेदोऽपि हि ते भ्रमभ्रममूल एवेति को विशेषोऽनयोः ? किं च प्रस्तुत

मयुतैकमंशं वदेत्त्व वा देववर प्रसीद ॥ मात्स्ये * यथा रत्नानि जलधेरसं-ख्येयानि पुत्रक । तथा गुणा ह्यनन्तस्य असंख्येया महात्मनः ॥ वैष्णवे धर्मे * नहि तस्य गुणास्सर्वे सर्वैर्मुनिगणैरपि । वक्तुं शक्या वियुक्तस्य सत्त्वाद्यैरखिलैर्गुणैः ॥ इत्यादिभिः । प्रायेण श्रीमद्रामायण-भारताभ्यां च । उपाधिना स्वरूपपरिणामेन वा ब्रह्मैव संसरतीति वादिभ्यां तु ब्रह्मण्यशेषदोषाभ्युपगमात् * पवित्रं मङ्गलं परम् इत्यादीनि नामानि कुप्येयुः । न च * यतो वाचो निवर्तन्ते [तै. आ. ४] इत्यादि ब्रह्मणोऽप्रामाणिकत्वपरम्; तस्य तुच्छत्वप्रसङ्गात्, * यतो वाचः [तै.आ.४] * आनन्दं ब्रह्मणः इत्यादि धर्मनिर्देशविरोधात्, तदा वाङ्म-नसनिवृत्तिवचनस्यानुपपत्तेः, ब्रह्मप्रमापकशास्त्रवैयर्थ्यप्रसक्तेः, * अथातो ब्रह्मजिज्ञासेति ब्रह्ममीमांसानारम्भणीयत्वप्रसङ्गात्, * वचसां वाच्यमुत्तमम् [जि] * नावेदविन्मनुते तं बृहन्तम् [काठ. ३-९] * शास्त्रयोनित्वात् [ब्र. १-१-३] इत्यादिवाक्यन्यायव्याकोपप्रसङ्गात्, * सैषाऽऽनन्दस्य मीमांसा भवति इत्युपक्रमेण * ते ये शतम् [तै. आ. ८-१] इत्यादिना चतुर्मुखानन्दानुक्रमसंरम्भविरोधाच्च ।

अतः * प्रकृतैतावत्त्वं हि [ब्र. ३-२-२१] इति सूत्र-न्यायेनानन्देयत्ताराहित्यपरमेव मतम् ॥ व्याजह्रिरे चैवमेतत्तातपादाः * श्रुतिस्तवानन्दमुखान् हरेर्गुणानियत्तया मातुमिवोद्यता सती । उवाच वाचा मनसा सहोन्नितां निवृत्तिमेव त्वव्धेरसंभवात् ॥ इति । अतः * न यत्र नाथ विद्यन्ते नामजात्यादिकल्पनाः * इत्यपि व्याख्यातम् । किं च,

नामजात्यादीनां कल्पनानिषेधे अकाल्पनिकपारमार्थिकनामरूपं च भगवतः प्रतिपादितं स्यादिति त्वं निगल्पाशं त्वमेव प्रयच्छसि । कथं च नाथेति नामग्रहणं नाम ब्रूयात् । अशब्दगोचरताऽप्येतेन गता । अतो विश्वविलक्षणस्वानुरूपनामकतया परिमितवाच्यवाचकप्रतिषेधपरम् । स्पष्टं चैतत् प्रदेशान्तरे * नामकर्मस्वरूपाणि न परिच्छेदगोचरे । यस्याखिलप्रमाणानि स विष्णुर्गर्भगस्तव ॥ [वि. ५-२-१९] इति ।

आह—नामस्ववयवार्थानां न प्रवृत्तिनिमित्तत्वम्, निमित्तत्वेऽपि न तत्र प्रामाण्यं तात्पर्याभावादिति । तदतिस्थवीयः, तदर्थप्रतीतेः स्वतः प्रामाण्यात्, अनपवादत्वात्, * यानि नामानि गौणानि * आस्य जानन्तो नामचिद्विवक्तन [वि. सू.] इत्यादिना भगवद्गुणतात्पर्यावगमाच्च ॥

मन्त्रवत् शास्त्रान्तरप्रमितभगवद्गुणस्मारकत्वेऽपि न गुणापहारः, सुदृढप्रमाणसिद्धत्वात् । अत एव ह्यत्रोपोद्घातनिगमनयोः गुणादिप्रकर्षं प्रतिपाद्य सुदृढय्य च मध्ये तत्स्मरणाय नामानि विधीयन्ते । अमीषु नामस्वन्यतममपि सर्वस्मै फलाय कल्पते । एकतरस्य भगवच्छास्त्रादिषु द्वादशाष्टषडक्षरादिषु मूलमूलिमन्त्ररूपेण परिणमय्य स्वातन्त्र्येण सर्वार्थेषु विनियोगात् * नामचिद्विवक्तनेत्येकवचनसामञ्जस्याच्च । उच्चारणमात्रेणोपकारिणामपि निर्वचनेन गुणप्रकाशने झटिति मनःप्रसादनत्वं पावनत्वं च नामनिर्वचनाध्यायेषु * अस्तौषीन्नामभिर्व्यासस्सशिष्यो मधुसूदनम् * एषां निरुक्तं भगवन् परमं वक्तुमर्हसि ॥ शुश्रूषोः श्रद्दधानस्य प्रजापतिपतेर्हरेः । श्रुत्वा भवेयं यत् पूतः शरचन्द्र इवामलः ॥ [भा. शा.] धृत-

श्रीवराहे, ताच्छील्यादिविषयेण क्तुप्रत्ययेन अस्य महिम्नः स्वाभाविकत्व-मुच्यते । पूर्णत्वव्याप्तिविषयत्वेन नाम्नोरपुनरुक्तिः ॥ २ ॥

[३. वषट्कारः] आकाशादिवैलक्षण्येन एतद्व्याप्तेः प्रयोजन-मुच्यते । वषट्कारः सर्वं वशं—स्वेच्छानुवर्ति करोतीति । करोतेः कर्मण्यण् । वश कान्तावित्यस्माद्धातोः, * प्रच्छि [वा. ३-२-१७८] * दंसेः [उणा. ९] इति, अत्र बाहुल्कानुवृत्तेः अटूप्रत्ययः, वशेष्पा-देशश्च । * सर्वस्य वशी सर्वस्येशानः [बृ. ६-४-२२] * जगद्वशे वर्ततेदम् इति ॥ ३ ॥

[४. भूतभव्यभवत्प्रभुः] अतः भूतभव्यभवत्प्रभुः, काल-त्रयवर्तिनां प्रभुः—स्वामी , शेषीति यावत् । * विप्रसंभ्योड्वसंज्ञायाम् [सू. ३-२-१८०] इति, डुः । समुदायस्य संज्ञात्वात् प्रत्ययाविरोधः । घुष्यन्ति हि शास्त्राणि * पतिं विश्वस्य [तै. ना. ११-११] पतिं पतीनाम् [श्वे. ६-७] * भूतस्य जातः पतिरेक आसीत् [यजु. ४-१-८] * तत्पुरुषस्य विश्वम् [तै. ना. १] यस्येमाः प्रदिशः [यजु. ४-१-८] * कृष्णस्य हि कृते भूतमिदं विश्वं चराचरम् [भा. स.] * भूतभव्यभवन्नाथः केशवः केशिसूदनः [भा. स.] * जगन्नाथस्य भूपते इत्यादीनि ॥ ४ ॥

[५. भूतकृत्] पुनः शेषित्वोपपादकानि पञ्च नामानि । सर्वाणि भूतानि स्वतन्त्रः सृजतीति भूतकृत् । यथा * सर्वं ह्येदं ब्रह्मणा हैव सृष्टम्, * यतो वा इमानि [तै. भृ. १] इत्यादि ॥ ५ ॥

नामजात्यादीनां कल्पनानिषेधे अकाल्पनिकपारमार्थिकनामरूपं च भगवतः प्रतिपादितं स्यादिति त्वं निगलपाशं त्वमेव प्रयच्छसि । कथं च नाथेति नामग्रहणं नाम ब्रूयात् । अशब्दगोचरताऽप्येतेन गता । अतो विश्वविलक्षणत्वानुरूपनामकतया परिमितवाच्यवाचकप्रतिषेधपरम् । स्पष्टं चैतत् प्रदेशान्तरे * नामकर्मस्वरूपाणि न परिच्छेदगोचरे । यस्याखिलप्रमाणानि स विष्णुर्गर्भगस्तव ॥ [वि. ५-२-१९] इति ।

आह—नामस्ववयवार्थानां न प्रवृत्तिनिमित्तत्वम् , निमित्तत्वेऽपि न तत्र प्रामाण्यं तात्पर्याभावादिति । तदतिस्थवीयः, तदर्थप्रतीतेः स्वतः प्रामाण्यात्, अनपवादत्वात्, * यानि नामानि गौणानि * अस्य जानन्तो नामचिद्विवक्तन [वि. सू.] इत्यादिना भगवद्गुणतात्पर्यावगमाच्च ॥

मन्त्रवत् शास्त्रान्तरप्रमितभगवद्गुणस्मारकत्वेऽपि न गुणापहारः, सुदृढप्रमाणसिद्धत्वात् । अत एव ह्यत्रोपोद्घातनिगमनयोः गुणादिप्रकर्षं प्रतिपाद्य सुदृढय्य च मध्ये तत्स्मरणाय नामानि विधीयन्ते । अमीषु नामस्वन्यतममपि सर्वस्मै फलाय कल्पते । एकतरस्य भगवच्छास्त्रादिषु द्वादशाष्टषडक्षरादिषु मूलमूलिमन्त्ररूपेण परिणमय्य स्वातन्त्र्येण सर्वार्थेषु विनियोगात् * नामचिद्विवक्तनेत्येकवचनसामञ्जस्याच्च । उच्चारणमात्रेणोपकारिणामपि निर्वचनेन गुणप्रकाशने झटिति मनःप्रसादनत्वं पावनत्वं च नामनिर्वचनाध्यायेषु * अस्तौषीन्नामभिर्व्यासस्सशिष्यो मधुसूदनम् * एषां निरुक्तं भगवन् परमं वक्तुमर्हसि ॥ शुश्रूषोः श्रद्दधानस्य प्रजापतिपतेर्हरेः । श्रुत्वा भवेयं यत् पूतः शरच्चन्द्र इवामलः ॥ [भा. शा.] धृत-

श्रीवराहे, ताच्छील्यादिविषयेण क्तुप्रत्ययेन अस्य महिम्नः स्वाभाविकत्व-मुच्यते । पूर्णत्वव्याप्तिविषयत्वेन नाम्नोरपुनरुक्तिः ॥ २ ॥

[३. वषट्कारः] आकाशादिवैलक्षण्येन एतद्व्याप्तेः प्रयोजन-मुच्यते । वषट्कारः सर्वं वशं—स्वेच्छानुवर्ति करोतीति । करोतेः कर्मण्यण् । वश कान्तावित्यस्माद्धातोः, * प्रच्छि [वा. ३-२-१७८] * दंसेः [उणा. ५] इति, अत्र बाहुल्कानुवृत्तेः अट्प्रत्ययः, वशेष्पा-देशश्च । * सर्वस्य वशी सर्वस्येशानः [बृ. ६-४-२२] * जगद्वशे वर्ततेदम् इति ॥ ३ ॥

[४. भूतभव्यभवत्प्रभुः] अतः भूतभव्यभवत्प्रभुः, काल-त्रयवर्तिनां प्रभुः—स्वामी , शेषीति यावत् । * विप्रसंभ्योड्वसंज्ञायाम् [सू. ३-२-१८०] इति, डुः । समुदायस्य संज्ञात्वात् प्रत्ययाविरोधः । घुष्यन्ति हि शास्त्राणि * पतिं विश्वस्य [तै. ना. ११-११] पतिं पतीनाम् [श्वे. ६-७] * भूतस्य जातः पतिरेक आसीत् [यजु. ४-१-८] * तत्पुरुषस्य विश्वम् [तै. ना. १] यस्येमाः प्रदिशः [यजु. ४-१-८] * कृष्णस्य हि कृते भूतमिदं विश्वं चराचरम् [भा. स.] * भूतभव्यभवन्नाथः केशवः केशिसूदनः [भा. स.] * जगन्नाथस्य भूपते इत्यादीनि ॥ ४ ॥

[५. भूतकृत्] पुनः शेषित्वोपपादकानि पञ्च नामानि । सर्वाणि भूतानि स्वतन्त्रः सृजतीति भूतकृत् । यथा * सर्वं ह्येदं ब्रह्मणा हैव सृष्टम्, * यतो वा इमानि [तै. भृ. १] इत्यादि ॥ ५ ॥

(६. भूतभृत्) भूतानि बिभर्तीति भूतभृत् । * विश्वं बिभर्ति भुवनस्य नाभिः (तै. ना.), * तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिताः एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेष्वर्पिताः (कौषी. ३. ४.) * स दाधार पृथिवीम् (यजु. ४. १. ८), * बिभर्त्यव्यय ईश्वरः [गी. १५. १७.] इति ॥ ६ ॥

(७. भावः) उक्तवक्ष्यमाणसर्वविभूतिभिः कलापीव प्रचालकेन विशिष्टतया भवतीति भावः । * भवतेश्चेति वक्तव्यम् [काशिका ३. १. १४३] इति णप्रत्ययः । तस्मिन् भगवति प्रकारतया अन्तर्भावादेव हि सर्वस्य तद्विभूतित्वव्यपदेशः ॥ ७ ॥

(८. भूतात्मा) इमं विभूतिविभूतिमद्भावं शरीरात्मभावलक्षणं विशिनष्टि - भूतात्मा इति । सर्वेषां भूतानामात्मा । अवरात्मनोऽपि इदमेव शरीरं प्रत्यात्मत्वं लब्ध्वाप्य साक्षात् प्रवृत्त्यादिषु नियच्छति, एवं परस्सर्वमिति विशेषः । दारागारकेदारादिविलक्षणेनात्यन्तपारतन्त्र्येण अन्तरंगो हि देहस्यात्मविभूतिभावः । * यः पृथिव्यां तिष्ठन् [बृ. ५. ७. ३.] * य आत्मनि तिष्ठन् [,,] * यस्य पृथिवी शरीरम् ( ,, ), * यस्यात्मा शरीरम् [ ,, ], * एष सर्वभूतान्तरात्मा (सु. उ. ७.),

यद्व्याप्य

*जगत्सर्वं शरीरं ते (रा. यु. १२०-२६), * तानि सर्वाणि तद्वपुः [वि. १. २२. ८५.], * तत्सर्वं वै हरेस्तनुः [,, ३८] इत्याद्युदाहार्यम् ॥

[९. भूतभावनः] तानि धारकपोषकभोग्यप्रदानेन वर्धयतीति भूतभावनः। *नन्द्यादिभ्यो ल्युः [सू. ३. १. १३४], *कृत्यल्युटो बहुलम् (३. ३. ११३) इति वा कर्तरि ल्युट्। एवं भावनः, प्रतर्दनः इत्यादयोऽपि ल्युट्प्रत्ययान्ताः। यथा *भूतभावन भूतेश (गी. १०. १५), *एष भूतपालः [बृ. ६. ४. २२] इति। एवं स्वरूपस्थितिप्रवृत्तिपालनैः शेषित्वमुपपादितम्। उत्पादनपोषणादिभिरुपादीयमानं प्रत्युद्देश्यं हि शेषीति *शेषः परार्थत्वात् (पू. मी. ३. १. १.) इति समर्थितम् ॥ ९ ॥

[१०. पूतात्मा] आत्मत्वेऽपि संसारिवत् अस्य शरीरभूतचिदचिद्दोषाननुपङ्गात् पूतात्मा-शुद्धस्वभावः। परावरयोस्तुल्यत्वेऽपि शरीरसम्बन्धे अवर एवात्मा कर्मफलानि भुञ्जानः क्लिश्यते। *जहात्येनां भुक्तभोगामजोऽन्यः (तै०. ना०) भोजयिता तु परः स्वातन्त्र्येण न भुंक्ते, चकास्ति च परम्: यथा शिष्यशासित्रोरविशिष्टेऽपि कशास्पर्शे कर्मकर्तृभावभेदेन शिष्य एक एव कशया पीड्यते, न शासिता। विज्ञायते च *अनश्नन्नन्यो अभिचाकशीति [मु. ३. १. १], *एष सर्वभूतान्तरात्मा अपहतपाप्मा [सु. ७], *न मां कर्माणि लिम्पन्ति (गी. ४. १४), पश्य देवस्य माहात्म्यं महिमानं च नारद। शुभाशुभैः कर्मभिर्यो न लिप्यति कदाचन ॥ (भा. शा. ३४०. २६) इत्यादि। सूत्रितं च *सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् (१. २. ८) इति ॥

[११. परमात्मा] यथा सर्वाणि भूतान्यनेनात्मवन्ति नैवमयमन्येन केनचित्; अतः परमात्मा। परो मा अस्येति परमः पृषो-

दरादित्वेन साधुत्वम्; परमश्चासावात्मा चेति । अनन्येश्वरः । यथा * आत्मेश्वरम् (तै. ना), * तस्माद्धान्यन्न परः किञ्च नास [अष्ट. २. ८. ९], * न तत्समश्चाभ्यधिकश्च दृश्यते [श्वे. ६. ८.], * यस्मात्परं नापरमस्ति किंचित् (तै. ना.), * न परं पुण्डरीकाक्षात् दृश्यते भरतर्षभ, * परं हि पुण्डरीकाक्षान्न भूतं न भविष्यति, * न दैवं केशवात्परम् [भा. आश्व. शे. २. २१], यस्मात्परस्मात्पुरुषादनन्तादनादिमध्यादधिकं न किंचित, * मत्तः परतरं नान्यत्किञ्चिदस्ति [गी. ७. ७]. परं ह्यमृत मेतस्माद्विश्वरूपान्न विद्यते, * परः पराणां परमः परात्मा [वि. १. २ १०] इति ॥ ११ ॥

[१२. मुक्तानां परमा गतिः] एवं सर्वशेषिणमेव परमप्राप्यमाह— मुक्तानां परमा गतिः । प्रकृतिबन्धाविद्याकर्मसंस्काररुचिविपाकेभ्यः आवरणेभ्य एकान्ततोऽत्यन्ततश्च विश्लिष्टा मुक्ताः । आम्नायते हि * तत्सुकृतदुष्कृते विधूनुते [कौ. १. ४], * अश्व इव रोमाणि विधूय पापम् [छा. ८. १३.], * नामरूपे विहाय (मु. ३. २८) * तदा विद्वान् पुण्यपापाद्विमुक्तः, ज्ञात्वा देवं मुच्यते सर्वपाशैः [श्वे ४-१६] * भिद्यते हृदयग्रन्थिः [मु. २-२-९] * मायामेतां तरन्ति ते [गी. ७-१४], श्रीनारायणीये * ये हीनास्सप्तदशभिः गुणैः कर्मभिरेव च । कलाः पञ्चदश त्यक्त्वा ते मुक्ता इति निश्चयः ॥ [भा. शा. ३३५-४०] इत्यादि । एवं स्रस्तसमस्तसंसारनिगलानाम् अनन्तसंविदानन्द-घनेन स्वरूपेण अपहतपाप्मत्वादिसत्यसङ्कल्पत्वावधिना गुणाष्टकेन भोगेन च परेणात्मना साम्यं च सिद्धान्तितम् * दिव्येन चक्षुषा मनसैतान् कामान् पश्यन् रमते (छा. ८-१२-५), * निरञ्जनः परमं साम्यमुपैति (मु. ३१-३) मम साधर्म्यमागताः (गी. १४-२), एवमप्युपन्यासा-त्पूर्वभावादविरोधं बादरायणः [ब्र. ४-४-७] इत्यत्र । प्रकृष्टसत्त्वोपा-दानेन रूपेण साम्यं च * स एकधा द्विधा भवति [छा. ७-२४-२],

* जक्षत्क्रीडन्रममाणः [८-१२-३] * कामान्नी कामरूप्यनुसंचरन् (तै. भृ), * तं ब्रह्मगन्धः प्रविशति तं ब्रह्मरसः प्रविशति (कौ १-५), * तं ब्रह्मालङ्कारेणालंकुर्वन्ति (कौ १-४) द्वादशाहवदुभयविधं बादरायणः [ब्र. ४-४-१२] इति ।

अत्र मुक्तानामिति बहुवचनेन तेषां भेदो बहुत्वं च स्पष्टम् । तथा च * परामृतात्परिमुच्यन्ति सर्वे [मु. ३-२-६] * महिमानस्सचन्ते (पु. सू.) * साधर्म्यमागताः [गी १४-२], * मामुपयान्ति ते (गी १०-१०,) इत्यादि च । साक्षी मुक्तानां गतिरित्युक्त्या भगवता च भेदः । तथा च * जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः (मु. ३. १-२), पृथगात्मानं प्रेरितारं च मत्वा (श्वे १. ६), पुरुषमुपैति दिव्यम् [मु ३-१-२-८], * सह ब्रह्मणा विपश्चिता (तै. आ) परं ज्योतिरुपसंपद्य (छा ८-१२-२) * मुक्तोपसृप्यव्यपदेशाच्च [ब्र. १-३-२] इत्यादि । स्पष्टं च मोक्षधर्मे * स हि नारायणो ज्ञेयस्सर्वात्मा पुरुषो हि सः । न लिप्यते मलैश्चापि पद्मपत्रमिवाम्भसा ॥ कर्मात्मा त्वपरो योऽसौ मोक्षबन्धैस्स युज्यते । स सप्तदशकेनापि राशिना युज्यते तु सः ॥ (भा. शा. ३५२-१४) । अतत्त्वथ्येन, मिथ्याभूतेन वोपाधिना, कुम्भादिनेव नभः, अविच्छिन्नं ब्रह्मैव संसरति, मुक्तौ तु भेद एव नास्तीति मतं शास्त्रेणैव पर्युदस्तम् ।

अमुष्मादेव परमात्साम्यात् भिन्नानामपि * ब्रह्म वेद ब्रह्मैव भवति (मु. २. २. ९) इत्यभेदवादाश्च मुख्या एव । यथा सोऽयं गौरिति खण्डमुण्डादिषु । अभेदवादिनां तु मुक्तिविषया भेदसाम्यवादा भज्येरन् । औपाधिकभेदवादिनां च मुक्तस्वरूपभङ्गोपगमात् मुक्तेरपुरुषार्थत्वं भेदवादासामञ्जस्यं च स्याताम् । इदमेव साम्यं मुक्तावभेदो व्याख्यातः । * तद्भावभावमापन्नस्तदाऽसौ परमात्मना । भवत्यभेदी (वि. ६-७-९५) इति । तस्य परस्य ब्रह्मणः भावाः ज्ञानशक्त्यादयः स्वभावाः, तेषां भावः-

आविर्भावः, गुणैस्साद्दश्यम्। अन्येषां द्वितीयो भावशब्दो व्यर्थः। मुक्तौ भेदनिषेधश्च देवाद्युपाधिविषयो व्यञ्जितः * देवादिभेदेऽपध्वस्ते नास्त्येवावरणो हि सः (वि. २-१४-३३) इति। गतिशब्दश्चैषः कर्मणि क्तिन्नन्तः। गतिः प्राप्तिः। ईप्सिततमं कर्मोद्देश्यम्। एतेन मुक्तत्प्राप्ययोः शेषशेषिभावो दर्शितः। श्रूयते च * एतमानन्दमयमात्मानमुपसंक्रम्य (तै. आ.), * अनुसञ्चरन् (तै. भृ.) * येन येन धाता गच्छति तेन तेन सह गच्छति तद्यथा तरुणवत्सा वत्सं वत्सो वा मातरम्, * छाया वा सत्त्वमनुगच्छेत्, * तथा प्रकारम् * इति।

धर्मिग्राहकमानसिद्धम् च अवरस्यात्मनः स्वाभाविकं शेषत्वं ज्ञानादिवन्मोक्षे न तिरस्क्रियते। किं तु निवारकवारणादाविर्भवति। * स्वेन-रूपेणाभिनिष्पद्यते [छा. ८. १२-२]। वैष्णवे धर्मे * यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः। तथा हेयगुणध्वंसादवबोधादयो गुणाः॥ प्रकाश्यन्ते न जन्यन्ते नित्या एवात्मनो हि ते॥ ज्ञानं वैराग्यमैश्वर्यं धर्मश्च मनुजेश्वर। आत्मनो ब्रह्मभूतस्य नित्यमेतच्चतुष्टयम्॥ * सम्पद्याविर्भावः स्वेन शब्दात् [ब्र. ४-४-१] इति च।

ननु * आप्नोति स्वाराज्यम् (तै. शी), * स स्वराट् भवति (छा. ७-२५-२) इत्युदाहृत्य, * अत एव चानन्याधिपतिः [ब्र. ४-४-९] इति स्वातन्त्र्यम् निर्णीतम्। कथमस्य परैदमर्थ्यमपुरुषार्थत्वं च परतन्त्रस्य स्यात्? मन्द! मैवं परिमूः। आत्माधिपतिं भगवन्तमन्तरेणान्येन क्लेशकर्मादिना परवत्त्वनिवृत्तिरनन्याधिपतित्वम् : न पुनरनाथत्वम्। तथा सत्यनधिपतिरित्येतावदुच्येत : न त्वनन्याधिपतिरिति। न च प्रियतमस्वपतिपारतन्त्र्यमपुरुषार्थः, राज्ञो दारादौ प्रियंकरतमत्वोपलम्भात्। सूचितश्च बहुधा गुणप्रधानभावः। जगद्व्यापारवर्जम्, भोगमात्रसाम्यलिङ्गाच्च (ब्र. ४. ४-१७, २१) इति ईश्वरेशितव्यभाववर्जम्, भोगमात्रेण तयोस्साम्यमिति। श्रीविष्णुतत्त्वे— * पारतन्त्र्यम् परे पुंसि

प्राप्य निर्गतबन्धनः । स्वातन्त्र्यमतुलं लब्ध्वा तेनैव सह मोदते ॥ तत्रै-वान्यत्र * स्वत्वमात्मनि सञ्जातं स्वामित्वं ब्रह्मणि स्थितम् । उभ-योरेष सम्बन्धो न परोऽभिमतो मम ॥ श्रीनारायणीये * व्रतावसाने सुशुभान्नरान्ददृशिमो वयम् । श्वेतांश्चन्द्रप्रतीकाशान् सर्वलक्षणलक्षि-तान् । नित्याञ्जलिकृतान् ब्रह्म जपतः प्रागुदङ्मुखान् ॥ (भा. मो. ३३७-३४) * कृताञ्जलिपुटा हृष्टा नम इत्येव वादिनः [,, ४०] * अतीन्द्रिया अनाहारा अनिष्पन्दास्सुगन्धिनः [,, २८] इत्यादिना श्वेतद्वीपवासिनां दिव्यरूपाद्युपेतत्वं भगवद्दास्यपरिचरणैकप्रियत्वं च प्रपञ्च्य तदेव मुक्तानां लक्षणमुक्तम्— * येऽपि मुक्ता भवन्तीह नरा भरतसत्तम ! । तेषां लक्षणमेतद्धि यच्छ्वेतद्वीपवासिनाम् ॥ इति ।

परमेति विशेषणेन मुक्तानामेव केषांचिदर्वाचीना गतिर्गम्यते । गृह्यते च निर्मुक्तजरामरणात्मककैवल्यलक्षणा * जरामरणमोक्षाय मामा-श्रित्य यतन्ति । [गी. ७-२९] इति । संसारपरमपदयोर्मध्ये तेषां स्थानं च * योगिनाममृतं स्थानं स्वात्मसन्तोषकारिणाम् [वि. १-१६-३८] इति । एवं मुक्तानां परमा गतिः, * सा काष्ठा सा परा गतिः [क० ३-११]. * विश्वात्मानं परायणम् [तै. ना], मामेवानुत्तमां गतिम् (गी. ७-१८), सोऽध्वनः पारमाप्नोति (क. ३-९), आत्मलाभान्न परं विद्यते इत्यादि सुलभम् ॥ १२ ॥

(१३ अव्ययः) इदमेव पञ्चभिर्नामभिरुपपादयति न वीयते न व्य-पगम्यतेऽस्मादित्यव्ययः । एरच् । एवंप्रत्ययः विनयः जयः इत्येवमादयः । न हि भगवान् कथंचित् संसारमहार्णवादुत्तीर्णं स्वचरणारविन्दं प्राप्त-वन्तं पुनरावर्तयति । अत एवाम्नासिषुः ।

* एतेन प्रतिपद्यमाना इमं मानवमावर्तन्नावर्तन्ते * न च पुनरा-वर्तते न च पुनरावर्तते (छा. ८. १) * अनावृत्तिश्शब्दादनावृत्तिश्शब्दात् इति (ब्र. ४. ४. २) यमस्मृतौ * ' सत्वं वहति सूक्ष्मत्वात्परं नारायणं

प्रभुम् । परमात्मानमासाद्य परं वैकुण्ठमीश्वरम् ॥ अमृतत्वाय कल्पेत न निवर्तेत वै पुनः इति । हारीते यतिधर्मे, *यतिधर्मगतश्शान्तः सर्वभूतसमो वशी । प्राप्नोति परमं स्थानं यत्प्राप्य न निवर्तते इति च ।

(१४. पुरुषः ।) पुरु बहु सनोतीति पुरुषः । सनोतेः दानकर्मणः *अन्येष्वपि दृश्यते' [सू. ३. १०१] इति डः । मुक्तेभ्योऽपि वाङ्मनसाऽपरिच्छेद्यगुणविभवस्वानुभवं ददाति हि भगवान् । यथा *एष ह्येवानन्दयाति [तै. आ. ७-१] सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिता (तै. आ- १. २) *दिव्येन चक्षुषा *मनसैतान् । कामान्पश्यन् रमते* (छा. ८. १२. ५) *जक्षत्क्रीडन् रममाणः [,, ३] *स तत्र पर्येति [,,] *कामान्नी कामरूपी [तै भृ. १०. ५]

*रसो वै सः रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति* [तै. आ ७. १] अस्मिन्नस्य च तद्योगं शास्ति [ब्र. सू १. १. २०] *तद्धेतुव्यपदेशाच्च इति [,,] ॥ १४ ॥

(१५. साक्षी ।) एवं तानानन्दयन्, स्वयमपि तृप्यन् साक्षात्करोतीति साक्षी ।

*साक्षाद्द्रष्टरिसंज्ञायाम् [सू. ५. २. ९१] इति इनिः । विशिनष्टि हि मुक्तप्राप्यम् *ब्रह्मणा विपश्चिता इति [तै. आ] विविधं पश्यच्चित्त्वं हि विपश्चित्त्वम् ॥ १५ ॥

(१६. क्षेत्रज्ञः ।) इत्थं तेभ्यः स्वानुभवं दातुं तदेकान्तं क्षेत्रं जानातीति–क्षेत्रज्ञः । 'आतोऽनुपसर्गे कः' [सू. ३. ३] स्वभोगसमृद्धिसमुद्भवभूमित्वात्, क्षेत्रं परमव्योम, तादृशशरीरत्वाद्वा यथा, आकाशशरीरं ब्रह्म इति [तै. शी. ६-२] तथा च श्रीनारायणीये मुक्तप्राप्यः क्षेत्रज्ञतया विशेष्यते मुक्तानां तु गतिर्ब्रह्मन् क्षेत्रज्ञ इति कल्प्यते इति [भा. मो] तद्धि मुक्तानां भगवदनुभवस्थानं *परमे व्योमन् सोऽश्नुते [तै. आ. २. १.] *तेह नाकं महिमानस्सचन्ते *नाकपृष्ठे विराजति, *स मोदते त्रिविष्टपे, तथा, अपुनर्भवभूपोराशीर्मन्त्रः *रात्रिः स्वमेतत्पुण्यान्तम *यत्पुराणमाकाशः तत्र मे स्थानं कुर्वन् न पुनर्भवाय *यद्गत्वा न निवर्तन्ते तद्धाम परमं मम [गी. ८. २१] मोक्षधर्मे *श्रुतिप्रमाणागममङ्गलैस्तु

युक्ते जरामृत्युभयादतीतः । ततो निमित्ते च फले विनष्टे अलिङ्गमाकाशमलिङ्ग एषः ॥ वैष्णवे, "एकान्तिनस्सदा ब्रह्म ध्यायन्ते योगिनो हि ये । तेषां तत्परमं स्थानं यद्वै पश्यन्ति सूरयः [वि. १. ६. ३९] ब्राह्मे "यत्तन्न किंचिदित्युक्तं महाव्योम यदुच्यते इत्यादि बहूक्त्वा. "तन्मोक्षस्तत्परं तेजो विष्णोरिति विनिश्चयः । श्रीवाराहे अगस्त्यं प्रति भगवान्–" पश्य लोकमिमं मह्यं यो न वेदैस्तु दृश्यते । त्वत्प्रियार्थमयं लोको दर्शितस्ते द्विजोत्तम ॥ वाराहे अगस्त्यः, "भगवंस्त्वन्मयो लोकः सर्वलोकवरोत्तमः । सर्वलोका मया दृष्टाः ब्रह्मशक्रादिनां मुने ॥ अयं त्वपूर्वलोको मे प्रतिभाति तपोधन । सम्पदैश्वर्यतेजोभिर्हर्म्यैं रत्नमयैस्तथा ॥ अद्यापि तं लोकवरं ध्यायंस्तिष्ठामि सुव्रत । कदा प्राप्स्येत्त्वसौ लोकः सर्वलोकवरोत्तमः ॥ इति । वाराहे "इति चिन्तापरोऽभवम् इत्यादि [वा. ६९. अ] ऋग्विधौ, "कार्याणां कारणं पूर्वं वचसां वाच्यमुत्तमम् । योगानां परमां सिद्धिं परमं ते पदं विदुः [जि. ७] आरण्यपर्वणि आर्ष्टिषेणः. "यमाहुः सर्वभूतानां प्रकृतेः प्रकृतिं ध्रुवाम् । अनादिनिधनं देवं प्रभुं नारायणं परम् ॥ ब्रह्मणः सदनात्तस्य परं स्थानं प्रकाशते इत्यादिना तत्पदं बहुधा विशेष्य, "तत्र गत्वा पुनर्नेमं लोकमायान्ति भारत । स्थानमेतन्महाराज ध्रुवमक्षरमव्ययम् ॥ ईश्वरस्य सदा ह्येतत् प्रणमात्र युधिष्ठिर इति ॥ श्रीहरिवंशे. [५३ अ] वैदिकपुत्रानयने भगवान्, ब्रह्मतेजोमयं दिव्यमाश्चर्यं दृष्टवानसि । अहं स भरतश्रेष्ठ मत्तेजस्तत्सनातनम् ॥ प्रकृतिस्सा मम परा व्यक्ताव्यक्ता च भारत । तां प्रविश्य भवन्तीह मुक्ता भरतसत्तम ॥ सा सांख्यानां गतिः पार्थ योगिनां च तपस्विनाम् । तत्परं परमं ब्रह्म सर्वं विभजते जगत् इत्यादि । ब्रह्मसंहितायां तत्वक्रममुक्त्वा "हृत्पद्मकर्णिकान्तस्थः पुरुषस्सर्वतोमुखः । सर्वज्ञस्सर्वगः सर्वस्सर्वमावृत्य तिष्ठति । तस्मात्तु परमं सूक्ष्ममाकाशं भाति निर्मलम् । शुद्धस्फटिकसङ्काशं निर्वाणं परमं पदम् ॥ तत्पदं प्राप्य तत्त्वज्ञा मुच्यन्ते च शुभाशुभान् । त्रसरेणुप्रमाणास्ते रश्मिकोटिविभूषिताः । भूयस्तेनैव जायन्ते न लीयन्ते च ते क्वचित् ॥ इत्यादिप्रसिद्धेः ।

अस्मिन् परमपदे अयोध्या अपराजिता पुरी. अपराजितमायत-

नम्, सहस्रस्थूणादिपरिकरं दिव्यास्थानरत्नम । तत्र पर्यङ्के. "श्रिया-सनाथ इत्याद्यनन्तमुक्तभोग्यं छान्दोग्यतैत्तिरीयकौपीतकीप्रभृतिप्रसिद्धमनुसन्धेयम् ॥

(१७. अक्षरः) तत्र मुक्तैस्सदाऽनुभूयमानोऽपि मधूत्सवन्तिस्सीमगुणोन्मज्जनेन उपर्युपरि भोग्यतयोपचीयते, न तु क्षरतीत्यक्षरः । पचाद्यच् विक्रमः सुरानन्दः इत्यादयोऽजन्ताः । "निरवद्यः परः प्राप्तेः निरधिष्ठोऽक्षरक्रमः [वि. ५. १. ४९] इति । शारीरके चतुर्थाध्याये अनेनैव क्रमेण मोक्षो निरणायि । न चैषोऽध्यायः अर्वाचीनफलविषयः कल्प्यः, तत्साधनादिविषयाणां पूर्वेषामपि त्रयाणामध्यायानां तदुदाहृतानामुपनिषदां स्मृतीतिहासादीनां च अर्वाचीनविषयत्वेन बहिश्शास्त्रं मोक्षनिर्णयप्रसङ्गात् । इत्थं मुक्तानां परमा गतिः ।

(१८. योगः) अस्यैव निरुपाधिकमुक्त्युपायत्वमपि वक्ति योगः युज्यते प्राप्यते अनेनेति "अकर्तरि च कारके संज्ञायाम [सू. ३. ३. १९] घञ् । एवम् अमोघः सर्गः इत्यादीनि घञन्तानि स्वयुजस्त्वनन्यापेक्षः, साक्षाद्धेतुरित्यर्थः ।

"एष ह्येवानन्दयाति [तै आ] "तद्धेतुव्यपदेशाच्च [ब्र. २. १. १५] "अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि [गी १८-३६] इति ।

(१९. योगविदां नेता) व्यवहितोपायनिष्ठानामपि योगविदां नेता नयतेस्तृच् , भर्ता धाता इत्यादयोऽपि तृजन्ताः । फलपर्यन्तनिर्वाहकः । "तेषामेवानुकम्पार्थम् [गी. १० ११] "तेषामहं समुद्धर्ता" [,, ७]

"संसारपारं परमीप्समानैराराधनीयो हरिरेक एव. [वि. ध. १०५. ६५] "परा मृतात्परिमुच्यन्ति सर्वे [मु. ३. २. ६.] "जुष्टस्ततस्तेनामृतत्वमेति इति (श्वे. १. ६.)

(२०. प्रधानपुरुषेश्वरः) इदमेवोपपाद्यते ; प्रधानपुरुषेश्वरः ; प्रधानस्य बन्धहेतोः पुरुषाणां च बध्यमानानां सर्वथा नियामकः । स्थेशभास [सू. ३. २. १७५] इत्यादिना वरच् । एवं स्थावरः । यथा "संयुक्तमेतत्क्षरमक्षरं च व्यक्ताव्यक्तं भरते विश्वमीशः । अनीशश्चात्मा बध्यते भोक्तृभावात् ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥ [श्वे १-८] "प्रधानक्षेत्रज्ञपतिर्गुणेशः [६. १६] "क्षरात्मानावीशते देव एकः

इति । एवमीश्वरो हि स्वमायया जीवानपराध्यतो बध्नन् प्रपद्यमानांश्च मुञ्चन् क्रीडितुं प्रभवति । "ईश्वरस्सर्वभूतानाम्" "दैवी ह्येषा गुणमयी" "दैवी देवस्य क्रीडतः" 'क्रीडनकम्' 'संसारमोक्षस्थितिबन्धहेतुः' श्रीविष्णुतत्त्वे—"तत्कृतायास्तु मायायास्तत्प्रसादं विना क्वचित् । नास्ति निर्णाशने हेतुः संक्षिप्यैतत्प्रभाषितम्" इति । 'पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ' 'देहयोगाद्वा सोऽपि' इति च सूत्रे । ताच्छील्यविपर्ययेण बरचा तत्त्वत्रयभेद ईश्वरेशितव्यभावश्चानौपाधिको ज्ञाप्यते ॥२०॥

**(२१. नारसिंहवपुः)** स्वभक्तयन्तरायनिवारणमपि प्रदर्शयति; 'नारसिंहवपुः' भक्तभयापहतदपेक्षासमक्षणप्रतिपन्नयथाकामदिव्यमहानृसिंहसंहननः ॥ २१ ॥

**(२२. श्रीमान्)** अतः परस्परदुर्घटापूर्वविकृतरूपपरिग्रहादपि 'श्रीमान्' सौन्दर्यलावण्यादिभिरतिमनोहरदिव्यरूपः । तत्र नृसिंहत्वयोः सुघटितत्वं पश्यताम् शुद्धिमदन्यन्नृमात्रं सिंहमात्रं वा दृष्ट्वा जुगुप्सा जायेतापि, तादृग्रूपपरिग्रहमात्रेणैव हि जगत् त्रातम् । "दंष्ट्राकरालं सुरभीतिनाशनं कृत्वा वपुर्दिव्यनृसिंहरूपिणा । त्रातं जगद्येन' इति ॥ २२ ॥

**(२३. केशवः)** एवंविधैश्वर्यसौन्दर्यकान्तलक्षणान्युपलक्षयति 'केशवः' प्रशस्तस्निग्धनीलकुटिलकुन्तलः । 'केशाद्वोऽन्यतरस्याम्' इति प्रशंसायां वः ॥ २३ ॥

**(२४. पुरुषोत्तमः)** सालक्षण्यप्रसक्त्या परमं वैलक्षण्यमाह- 'पुरुषोत्तमः' पुरुषेभ्य उत्कृष्टतमः । पुरुषशब्देन चेतनवाचिनाऽचेतयमाना व्यक्ताव्यक्तरूपा प्रकृतिर्व्यावर्त्यते । उदित्युत्कृष्टवाचितया बद्धाः, सामर्थ्यप्राप्तेन तरपा मुक्ताः, तमपा नित्यमुक्ताः सूरयोऽनन्त वैनतेयादयः । इदं च तेभ्यो वैलक्षण्यम् अवद्यप्रतिभटतया व्यापनभरणाद्युपकारैः स्वाम्येन च स्वभावत एवोत्कर्षात् । इदं हि बहुभिस्तात्पर्यलिङ्गैः परमं गुह्यमगीयत । 'द्वाविमौ पुरुषौ लोके' इत्यत्र, 'भूमि रापोऽनलो वायुः' 'यो मामजमनादिं च' 'अविकाराय शुद्धाय' 'परः पराणां परमः' इत्यादि बह्विदंपरं द्रष्टव्यम् । अत्रापि भोक्तृभोग्यनियन्तृणामत्यन्तभेदस्स्पष्टः । अतो ब्रह्मपरिणामपक्षश्च प्रतिक्षिप्तः । ब्रह्मणः सर्वविकारस्य ब्रह्मसंसारस्येश्वरातिरिक्तब्रह्मसद्भावस्याव्यक्तमुक्तेश्वराणां ब्रह्मणि प्रलयोत्पादयोश्चाभ्युपगमो हि यथोक्तपुरुषोत्तमत्वेन सर्वेण वेदसिद्धान्तेन च विरुध्यते ॥ २४ ॥

**(२५. सर्वः)** एवं सर्वनिर्व्यपेक्षोऽप्यनुपेक्षमाणः सर्वं स्वरूपस्थित्यादिभिः स्वनिर्वाह्यतया शरीरमिवात्माऽनुसंधत्ते; अतः 'सर्वः' सरतेः 'इण् शीभ्यां वन्' 'सर्वनिघृष्व' इत्यादिना सरत्यवयवानित्यर्थे वन् प्रत्ययः । सरतिः गत्यर्थत्वादत्र बुध्यर्थः । 'असतश्च सतश्चैव सर्वस्य प्रभवाप्ययः । सर्वस्य च सदा ज्ञानात् सर्वमेनं प्रचक्षते' इति निर्वचनात् । ईदृशी व्याप्तिरेव सर्वसामानाधिकरण्य निबन्धनमुक्तम्, 'येन सर्वमिदम् प्रोतम्' इत्यारभ्य 'सर्वे सर्वमिदम्' इति श्रुतेः; 'सर्वं समाप्नोषि ततोसि सर्वः' इति च ॥ २५ ॥

**(२६. शर्वः)** स्वशरीरभूतानामशुभमपि शृणातीति—'शर्वः' पूर्ववत् वः ॥ २६ ॥

**(२७. शिवः)** शुभावहश्च 'शिवः' शीङःशुभार्थत्वात् । 'सर्वनिघृष्वरिष्वलष्वशिव' इत्यादिना वन्प्रत्ययः, ह्रस्वत्वम्, गुणाभावश्च निपात्यते । यथा 'शाश्वतं शिवमच्युतम्' 'स्मृते सकलकल्याणभाजनम्' 'मङ्गलं भगवान् विष्णुः' 'मङ्गलायतनं हरिः' 'मङ्गलानां च मङ्गलम्' 'मङ्गल्यं मङ्गलं विष्णुम्' इत्यादिना ॥ २७ ॥

**(२८. स्थाणुः)** तत्रच 'स्थाणुः' । तिष्ठतेः, स्थोणुरितिणुः; दृढानुग्रह इति भावः । नहि भगवतः स्पर्शः प्रायश्चित्तादिसामान्यधर्मवदुपात्तदुरितक्षेपेण कारीरीचित्रादर्शपूर्णमासादिवद्देवतान्तरवद्वा काम्यमानैककामप्रदानेन वानृणो विरमति, प्रबलैर्वान्तरायैः प्रतिवध्येत हीयेत, अचह्नियेतवा ! किंतु अशेषमशिनं संशमय्य अखिलमभिलपिनं च बहुमुखं विश्राण्यापि, न जातुचित् विश्राम्यति । यथा 'एको बहूनां यो विदधाति कामान्' 'एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत्' 'तस्मिन् प्रसन्ने किमिहास्त्यलभ्यम्' 'सकलफलप्रदोहि विष्णुः' 'रत्नपर्वतमारुह्य यथारत्नं नरो मुने । सत्त्वानुरूपमादत्ते तथा कृष्णान्मनोरथान्' 'भौमं मनोरथं स्वर्गं स्वर्गिवन्द्यं च यत्पदम् । प्राप्नोत्याराधिते विष्णौ मुक्तिमप्यतिदुर्लभाम्' 'यद्दुर्लभं यदप्राप्यं

मनसो यदगोचरम् । तदप्यप्रार्थितं ध्यातो ददाति मधुसूदनः' ।
॥ इति ॥ ॥ २८ ॥

**(२९ भूतादिः)** अपिच स्पृहणीयतमत्वाद् भूतैरुपादीयते इति 'भूतादिः' । 'उपसर्गेघोः किः' एवं सर्वादिर्निधिरित्यादयः । 'किं प्रजया करिष्यामो येषां नोयमात्मा' उपबृंह्यते च, 'एते वयं सर्वसमृद्धकामा एषामयं नो भविता प्रशास्ता' इत्यादिभिः । ॥२९॥

**[ ३० निधिरव्ययः ]** अतः 'निधिरव्ययः' महालोभेनापद्धनयन्निधेयत्वात् । यथाच, 'तद्यथा हिरण्यनिधिं निहितम्' इत्यादि । सर्वदा सर्वथोपजीव्यमानत्वेऽपिकलयाऽप्यनुपचयात् 'अव्ययः' । निधिविशेषणमेतत्, न स्वतन्त्रं नाम । अन्यथा 'अव्ययः पुरुषः' इति पौनरुक्त्यात् ॥
॥ ३० ॥

**[ ३१ संभवः ]** एवं निहितमप्यात्मानं तत्संश्लेषत्वरया अर्थिभ्यः प्रकाशयन् 'संभवः' । समन्तात् भवो यस्येति, तत्र तत्र सर्वदेशकालादिषु मत्स्य, कूर्म, वराह, नृसिंह, वामन, राम, कृष्णादिभी रूपैरेकैकपुनरुक्तैरसंख्येयैरभीक्ष्णमाविर्भवतीत्यर्थः । तथा 'बहुधा विजायते' 'बहूनि मे व्यतीतानि' 'यदा यदा हि धर्मस्य' इत्यादि ॥
॥ ३१ ॥

[३२. भावनः] एवं संभूयानिष्टनिवारणादिना उज्जीवयतीति 'भावनः' । यथा, 'परित्राणाय साधूनाम्' इत्यादि ॥ ३२ ॥

( ३३. भर्ता ) किंच, तानात्मदानेन तच्छीलः पुष्णातीति 'भर्ता' । ॥३३॥

[ ३४. प्रभवः ] अयमस्य भवः प्रकृष्ट इति 'प्रभवः' । प्रकर्षश्च जन्मनोऽनाघ्रातदोषगन्धत्वेन, स्ववेदनमात्रेण सकलजन्मनिगलनिर्मूलनहेतुत्वेन च देवादिजन्मवैजात्यात् । यथा, 'अजायमानः' 'तस्य धीराः परिजानन्ति योनिम्' 'नैष गर्भत्वमापेदे न योन्यामवसत्प्रभुः । आत्मनस्तेजसा कृष्णस्सर्वेषां कुरुते गतिम्' । 'अप्रमेयमनाद्यन्तं कामाज्जातमजं नृपु । पाण्डवस्तर्कयामास कर्मभिर्देवसंमितैः' 'जन्म कर्मच मे दिव्यमेवं यो वेत्ति तत्त्वतः । त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन' इत्यादि ॥ ३४ ॥

[ ३५. प्रभुः ] एवममन्दपरतन्त्रमनुष्यादिसाम्येनावतरन्नपि 'प्रभुः' भवतेः, 'बहुलवचनादन्येऽपि कृतः प्राप्तमभिधेयं व्यभिचरन्ति' इति संज्ञायामपि डुः । देवाद्यसुकरपदैश्वर्यानुगुणभोगापवर्गादिफलसमर्पणसमर्थः । स्पष्टं चैतदपदानं चिन्तयन्तीशिशुपालसायुज्यादिषु ॥ ॥ ३५ ॥

[ ३६. ईश्वरः ] अतः पारमेष्ठ्यादपि जन्मस्वधिकतमप्रयोजनैश्वर्यात् 'ईश्वरः' । यथा, 'मानुषीं तनुमाश्रितम् । परं भावमजानन्तः' 'भूतानामीश्वरोऽपि सन्' इत्यादि । ॥३६॥

[ ३७. स्वयंभूः ] कुत इदं सर्वं वैभवम्.? यतः 'स्वयंभूः' । 'भुवस्संज्ञान्तरयोः' इति क्विप् । स्वलीलादिप्रयोजनाय स्वेच्छया स्वासाधारणीं परमसत्त्वमयीं प्रकृतिमेव सुरनरसजातीयसन्निवेशामधिष्ठाय, स्वयमेव भवतीति, न चतुर्मुखादिवद् ईश्वरान्तरेण कर्मादिभिर्वा परवत्तयेत्यर्थः । यथा, 'स्वयंभु ब्रह्मपरमं कवीनाम्' 'प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया' । त्रिगुणजीव प्रकृत्योरपि स्वत्वेऽपि स्वभोगविभूतित्वासाधारण्याद्विशिनष्टि-प्रकृतिं स्वामिति । तथाच श्रीहरिवंशे, वैदिकपुत्रानयने लीलोपकरण-प्रकृतिद्वयोपन्यासोपरि—'ब्रह्म तेजोमयं दिव्यमाश्चर्यं दृष्टवानसि । अहं स भरतश्रेष्ठ मत्तेजस्तत्सनातनम् ॥ प्रकृतिस्सा मम परा व्यक्ताव्यक्ता च भारत । तां प्रविश्य भवन्तीह मुक्ता भरतसत्तम' ॥ इति । व्यक्तं हि श्रीविष्णुतत्त्वे पञ्चशक्तिमुक्त्वा, 'मत्स्यकूर्मवराहाणामाविर्भावो महात्मनः । अनयैव द्विजश्रेष्ठ नान्यथा तद्विरोधतः' ॥ इति । वैष्णवे—'समस्ताश्शक्तयश्चैताः' इत्यादिना प्रादुर्भावप्रयोजननिमित्तोपादानकालसंख्यादिवैलक्षण्यं सुव्यञ्जितम् । श्रीमति रामायणे, 'सर्वलोकेश्वरस्साक्षाल्लोकानां हितकाम्यया' 'स हि देवैरुदीर्णस्य रावणस्य वधार्थिभिः । अर्थितो मानुषे लोके जज्ञे विष्णुस्सनातनः' ॥ 'सएष स्वयमुद्भवो' इत्यादौ च । ॥३७॥

[ ३८. शंभुः ] एवं स्वसौन्दर्यसौशील्यादिगुणाविष्कारेण शं—सुखं भावयतीति 'शंभुः' । 'डुप्रकरणे मितद्र्वादिभ्य उपसंख्यानम्' इति डुः । यथा 'विश्वाद्यं विश्वशंभुवम्' । उपबृंहितं च, 'रूपौदार्य-

गुणैः पुंसां दृष्टिचित्तापहारिणम्'। 'चन्द्रकान्ताननं राममतीव प्रियदर्शनम्' इत्यादिभिः । ॥३८॥

[ ३९. आदित्यः ] अथैवां प्रादुर्भावानामुदाहरणं पूर्णं पुरुषमाह—आदित्यः । आदित्योऽस्य निवास इति "दित्यदित्यादित्य" इत्यादिना ण्यः । एवंहि ब्रह्म मीमांसितम्, 'अन्तस्तद्धर्मोपदेशात्' इति । 'यएषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' 'स यश्चायं पुरुषे, यश्चासावादित्ये, स एकः' 'ध्येयस्सदा सवितृमण्डलमध्यवर्ती' इत्युदाहृत्य, आदित्यान्तरस्य, 'तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी' इत्याम्नातम् । ॥३९॥

[ ४०. पुष्कराक्षः ] सर्वैश्वर्यासाधारणलक्षणं पुण्डरीकाक्षत्वं संगमयति—"पुष्कराक्षः" । 'अक्ष्णोऽदर्शनात्' इत्यच् समासान्तः । ॥४०॥

( ४१. महास्वनः ) तस्यैव चिह्नान्तरं च सूचयति 'महास्वनः' । महान्—पूज्यः स्वनः—शब्दो यस्येति, 'आन्महतः' इत्यादिना आत्त्वम् । आमनन्ति हि, 'तस्योदितिनाम' इति । तस्यैतस्य नामरूपं सशब्दम्, 'सैषात्रय्येव विद्या तपति यएषोऽन्तरादित्ये हिरण्मयः पुरुषः' इति त्रयीरूपं वा, पूज्यतमं सावित्रीपतिप्रतिपाद्यतया वा । अतोहि मोक्षधर्मेषु "विद्यासहायवन्तं मामादित्यस्थं सनातनम्" इति । ॥४१॥

( ४२. अनादिनिधनः ) एतद्दिव्यनामरूपविशिष्ट एव

"अनादिनिधनः" । नित्ययौवनतया जनिजरादिदुरितदूरनित्य विग्रहः । न तत्स्वरूपनित्यत्वपरमेतत्, तस्य चतुर्मुखादीनामपि तुल्यत्वात् । 'भारूपस्सत्यसङ्कल्पः' 'हिरण्मयः पुरुषः' 'विद्युतः पुरुषादधि" 'आदित्यवर्णं तमसः परस्तात्' 'सर्वकर्मा सर्वगन्धस्सर्वरसः" 'रुक्माभं स्वप्नधीगम्यं विद्यात्तु पुरुषं परम्' 'पुरुषः पुण्डरीकाक्षः' इत्यादिश्रुतिस्मृतिसहस्रैः, अमलनीलोज्ज्वलमध्यस्थनीलतोयदविद्युल्लेखाप्रख्यम्, अतिसौन्दर्यलावण्ययौवनाद्यभिमतगुणकतया स्वस्यापि नित्यमिच्छागृहीतं रूपं तावत् समर्थ्यते । अस्यच "सदैकरूपरूपाय" 'श्रीवत्सवक्षा नित्यश्रीः' पाराशर्ये 'स एव भगवान् कालस्सर्वमात्मवशं नयेत्' 'नास्ति विष्णोः परं तत्त्वं तस्य कालात्परा तनुः' इत्यादिकण्ठोक्तेः, सदाकारणत्वात्, ज्ञानादिवत् स्वरूपनिरूपणानुप्रवेशात्, तमसः परत्वेन जन्मादिविकाराविवर्तित्वात्, अक्षरत्वकालातीतत्वादिविशेषणात्, तत्क्रतुन्यायाच्च, नित्यत्वं च सुदृढम् । ईदृग्बलवदागमन्यायविरोधदोषमूषिकाघ्रातमस्य रूपस्य काल्पनिकागन्तुकत्वानुमानं न प्ररोहेत् । अत एव नीरूपवादा अपि भौतिकहेयदेहनिषेधका नेतव्याः नीताश्च 'न भूतसंघसंस्थानो देहोऽस्य परमात्मनः' 'न तस्य प्राकृता मूर्तिर्मांसमेदोस्थिसंभवा' इत्यादिभिश्शास्त्रैरेव । सूत्रकारवत् वाक्यतद्भाष्यकाराभ्यामपि आदित्यान्तरं परं ब्रह्म नित्यरूपं न्यरूपि 'रूपं वाऽतीन्द्रियमन्तःकरणप्रत्यक्षनिर्देशात्' 'अञ्जसैव विश्वसृजो रूपम्' इति । अत्र, अवतारेषु च नास्याद्यन्तौ, यथा लौकिकम्, किन्तु यवनिकाया इव परमव्योम्नो निर्गमप्रवेश-

मात्रमेव । 'भुजैश्चतुर्भिस्समुपेतं ममेदं रूपं विशिष्टं दिवि संस्थितं च । भूमौ गतं पूजयताप्रमेयं सदाऽपि तस्मिन्निवसामि देवाः' ॥ 'स्वर्लोकमागच्छ गतज्वरश्चिरं सुरेन्द्रगुप्तं गतदोषकिल्बिषम्' 'विवेश वैष्णवं तेजस्सशरीरस्सहानुगः' इति हि मुनिगुह्यम् ॥४२॥

**[ ४३. धाता ]** कारणत्वेनापि ब्रह्मादिभ्यो वैलक्षण्यमाह– 'धाता' । तृन् । एवं भर्तेत्यादयः । अनिरुद्धस्वरूपः, सर्वयोनाय-चित्समष्टिभूतायां प्रकृतौ चित्समष्टिभूतं विरिञ्चात्मकं गर्भं दधातीति; यथा "मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम्" मौलसंहितायाम् "धाता क्षेत्रे कर्मबीजभूतं गर्भं दधाति" इति । "अप एव ससर्जादौ तासु वीर्यमपासृजत्" इत्यादि ॥ ४३ ॥

**[ ४४. विधाता ]** तं गर्भं परिणमय्याविर्भावयतीति च 'विधाता' । "यो ब्रह्माणं विदधाति पूर्वम्" इति; "अथ पुनरेव नारायणः" इत्युपक्रमे, "तत्र ब्रह्मा चतुर्मुखोऽजायत" "हिरण्यगर्भं पश्यत जायमानम्" "तस्माद्विराडजायत" "तस्मिन्नण्डे स्वयं ब्रह्मा सर्वलोकपितामहः" इत्यादिवचनेभ्यः ॥ ४४ ॥

**( ४५. धातुरुत्तमः )** अतो 'धातुरुत्तमः' स्रष्टुरुत्कृष्टतमः, दण्डापूपिकया तत्सृष्टेभ्यः प्रजापतिप्रभृतिभ्यश्च; यथा "तत्त्वं नारायणः परः" "एतेषां कतमो देवः परः कोवाऽथवाऽपरः" इति पृष्टे "परो नारायणो देवस्तस्माज्जातश्चतुर्मुखः" इत्यादिब्रह्मरुद्रसंवादयज्ञाभ्रदरणादाविदं स्पष्टम् ॥ ४७ ॥

( ४६. अप्रमेयः ) तेषां करणैः प्रमातुमशक्यः 'अप्रमेयः' "ईयति" इतीकारः । यथा "यन्नायं भगवान् ब्रह्मा जानाति पुरुषोत्तमम्" । स्वयञ्च ब्रह्मा "नह्यादिमध्यान्तमजस्य यस्य विद्मो वयं सर्वमयस्य धातोः । न च स्वरूपं न परप्रभावं नचैव सारं परमेश्वरस्य" । ब्रह्मरुद्रसंवादे च "न स शक्यस्त्वया द्रष्टुं मयाऽन्यैर्वाऽपि सत्तम । सगुणो निर्गुणो विश्वो ज्ञानदृश्यो ह्यसौ स्मृतः" "तवान्तरात्मा मम च ये चान्ये देहिसंज्ञिताः । सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित्क्वचित्" ॥ इति । अतीन्द्रियत्वादकृत्स्नग्रहणत्वाच्चाप्रमेयत्वमेष्वेव वचनेषु स्फुटम् । ॥४६॥

( ४७. हृषीकेशः ) तत्करणानामपि नियामकत्वाद् 'हृषीकेशः' । यथा श्रीहरिवंशे 'हृषीकाणीन्द्रियाण्याहुस्तेषामीशो यतो भवान् । हृषीकेशस्ततो विष्णुः ख्यातो देवेषु केशवः" इति, "हर्षात्सौख्यात्सुखैश्वर्याद्धृषीकेशत्वमश्नुते" इति वा ॥४७॥

( ४८. पद्मनाभः ) चक्तं हि सर्वं व्यनक्ति 'पद्मनाभः' पद्मभुवः प्रभवः पद्मो नाभावस्येति । "अच्प्रत्यन्ववपूर्वात्" इत्यत्र योगविभागादच् । यथा "धातोस्तानरसंविशति पञ्चवर्षशतानि तु ।" "धातुर्नाभ्यां पुष्करं प्रादुर्भवति, पुष्करं पुण्डरीकञ्च पद्मं चक्रमित्येष कालः" "अजस्य नाभावध्येकमर्पितम्" "अजस्य नाभावध्येकं यस्मिन्विश्वं प्रतिष्ठितम्" इत्यादि ॥४८॥

[ ४६. अमरप्रभुः ] तेषाममराणां सृष्ट्याद्यधिकार-

दानेन निर्वाहकस्य 'अमरप्रभुः' । श्रीमति रामायणे ब्रह्मा "महार्णवे शयानोऽप्सु मां त्वं पूर्वमजीजनः" "प्राजापत्यं त्वया कर्म सर्वं मयि निवेशितम्," महाभारते "एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौ स्मृतौ । तदादर्शितपन्थानौ सृष्टि संहारकारकौ" इत्यादि ॥ ४६ ॥

[ ५०. विश्वकर्मा ] अतो 'विश्वकर्मा' ब्रह्मसृष्टेः प्रागूर्ध्वञ्च विद्यमानं विश्वं कर्म जगद्व्यापारोऽस्यैवेति । यथा "विश्वकर्मणस्समवर्तताधि" "पुरुषं विश्वकर्माणमादिदेवमजं विभुम्" । सर्वञ्चैतत् "य इमा विश्वा भुवनानि जुह्वत्" इत्युपक्रमे विश्वकर्मसूक्ते स्पष्टं द्रष्टव्यमिति ॥ ५० ॥

[ ५१. मनुः ] विश्वकर्मत्वञ्च "तदैक्षत बहुस्यां प्रजायेयेति" "स ईक्षत लोकान्नु सृजा इति" 'सोऽकामयत बहु स्यां प्रजायेयेति' 'अथ पुनरेव नारायणः सोऽन्यं कामं मनसा ध्यायीत' 'तदसदेव सन्मनोऽकुरुत स्यामिति' 'सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः' 'स सिसृक्षुस्सहस्रांशादसृजत्पुरुषं द्विधा' 'कामाच्च नानुमानापेक्षा' इति प्रसिद्धात्संकल्पलवमात्रान्मननादेवेति 'मनुः' । 'मन ज्ञाने' 'शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्य उः' ॥ ५१ ॥

( ५२. त्वष्टा ) एवं निर्मितं नामरूपव्याकरणेन सुरनरादिवैचित्र्यविभक्तं व्यलक्षित । अतः 'त्वष्टा' । त्वक्षतेस्तनूकरणकर्मणस्तृच, 'स्कोस्संयोगाद्योरन्ते च' इति ककारलोपः । तनूकरणं

व्यक्तावयवीकरणम् । त्विषेर्वा दीप्तिकर्मणः 'नप्तृनेष्टृ' इत्यादिना तृन् उपधाया अत्वञ्च निपात्यते । "त्विषेर्देवतायामकारश्चोपधाया अनिट्त्वञ्च' इति वा निपातः। दीपनं प्रकाशनम्, अवयवोन्मीलनमित्यर्थः यथा 'त्वष्टारं रूपाणि विकुर्वन्तं विपश्चिम्" 'वेदेन रूपे व्यकरोत्सतासती प्रजापतिः' 'सर्वाणि रूपाणि विचित्य धीरः' 'नामरूपञ्च भूतानां कृत्यानाञ्च प्रपञ्चनम्" इत्यादि ॥ ५२ ॥

( ५३. स्थविष्ठः ) अतः 'स्थविष्ठः' स्थूलतमः । स्थूल शब्दादिष्ठन् 'स्थूलदूर' इत्यादिना यणादिपरलोपः पूर्वस्य च गुणः । 'बहुस्याम' इति यथा संकल्पं बहूभवन् सूक्ष्माव्यक्तसमष्टिकारणपर्वणो भोक्तृसुरनरतिर्यक्स्थावरकरणकलेवरतद्गोचरशब्दस्पर्शादितदास्पदचतुर्दशभुवनब्रह्माण्डतदावरणरूपस्थूलव्यक्तव्यष्टिकार्यविस्तारवान जायत इत्यर्थः। यथा 'नास्त्यन्तो विस्तरस्य मे' 'व्योमाम्बुवाय्वग्नि महीस्वरूपैर्विस्तारवान् योऽणुतरोऽणुभावात्' 'विस्तारस्सर्वभूतस्य विष्णोस्सर्वमिदञ्जगत्' 'त्वद्विस्तारो यतो देव' इत्यादि ॥ ५३ ॥

[ ५४. स्थविरः ] एवं संकल्पमूलकारणत्वेऽपि लौकिक मृदादिकारणवैलक्षण्यं विवक्षति "स्थविरः"। तिष्ठतेः 'अजिरशिशिर" इत्यादिना किरच्प्रत्ययो ह्रस्वत्वं वुगागमश्च निपात्यते। सकलं कालं स्थास्नुर्लीलया कालमपेक्षमाणोऽन्यतन्त्रः । अनेन कालविशेषापेक्षपरिणामदुग्धदध्यादिवैलक्षण्यं विवक्षितम्; कालस्यापि सर्वात्मना तादधीन्यात् । यथा 'कालस्य च हि मृत्योश्च

जङ्गमस्थावरस्य च । ईशिता भगवानेकस्सत्यमेतद्ब्रवीमि ते' 'कालचक्रं जगच्चक्रं युगचक्रञ्च केशवः । आत्मयोगेन भगवान्परिवर्तयतेऽनिशम्' 'कालं स पचते तत्र न कालस्तत्र वै प्रभुः" इत्यादि ॥५४॥

[ ५५. ध्रुवः ] अनन्तपरिणामादप्यविकुर्वाणतया स्वरूपादप्रच्याव्यः 'ध्रुवः' । 'ध्रु गतिस्थैर्ययोः' "तुदादिभ्यो णल्कौ" इति कः । एवं गुहः, वृषः, निमिषः, इत्यादयोऽपि कप्रत्ययान्ताः । यथा "अजय्यश्शाश्वतो ध्रुवः" "अविकाराय शुद्धाय" अपक्षयविनाशाभ्याम्" इति ॥ ५५ ॥

[ ५६. अग्राह्यः ] मृत्तन्त्वादिरिव कुलालकुविन्दादिनाऽनधिष्ठेयः 'अग्राह्यः' । "ऋहलोर्ण्यत्' इतिण्यदन्तः । एवं वेद्यः, मान्यः,इत्यादयोऽपि । यथा "नैनमूर्ध्वं न तिर्यञ्चं न मध्ये परिजग्रभत्" "ब्रह्माध्यतिष्ठत्" "अधितिष्ठत्येकः" इत्यादि ॥५६॥

[ ५७. शाश्वतः ] एवं 'शाश्वतः' अनवरतजगद्व्यापारप्रवाहत्वेन नित्यः; यथा "अव्युच्छिन्नास्ततस्त्वेते सृष्टिस्थित्यन्तसंयमाः" इत्यादि ॥ ५७ ॥

( ५८. कृष्णः ) एवंविधलीलारसेन नितान्तनिर्वृतः "कृष्णः" । आर्षं निरुक्तम्" कृषिर्भूवाचकश्शब्दो णश्च निर्वृतिवाचकः । कृष्णस्तद्भावयोगाच्च" इति ॥ ५८ ॥

( ५९. लोहिताक्षः ) ईदृङ्निर्वृतिपिशुनरम्यराजीवताम्रनयनः "लोहिताक्षः" ॥ ५९ ॥

**( ६०. प्रतर्दनः )** सर्वेषां संहर्तृत्वं चाह "प्रतर्दनः" । तर्दिर्हिंसाकर्मा । यथा "यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः" "अत्ता चराचरग्रहणात्" इति ॥ ६० ॥

**( ६१. प्रभूतः )** सर्वसंहारेऽपि "प्रभूतः" समृद्धः, नित्य निर्मर्यादभोगोपकरणपरमपदत्वात् ॥ ६१ ॥

**( ६२. त्रिककुद्धामा )** तत्र परमाणुमात्रं हि सृष्टि संहारगोचरमिदं विश्वम् । तदेतत् स्पष्टयति त्रिककुद्धामा" इति । "त्रिककुब्धामा" इति केचित् । उभयथाप्यवयवा लक्ष्यन्ते । त्रिककुत् त्रिपाद्विभूतिलक्षणं परमं धाम यस्य स त्रिककुद्धामा । आम्नायते हि "पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि" इति । त्रिपात् पाद इति परममहत्परमाणुपरिमाणौ व्याख्यातौ । "यस्यायुतायुतांशांशे विश्वशक्तिरियं स्थिता" "मेरोरिवाणुर्यस्यैतत्" इति । अथवा त्रिककुच्छब्दो ज्ञानादिगुणषट्कयुगलत्रिकलक्षकः, तस्य धाम धर्मी पूर्णषाड्गुण्य इत्यर्थः । अतो ह्येनं त्रियुगमाहुः । यद्वा—आर्षनिरुक्तं त्रिककुत् । यथा मोक्षधर्मे स्वयम् "तथैवासं त्रिककुदो वाराहं रूपमास्थितः । त्रिककुत्तेन विख्यातश्शरीरस्य प्रमापणात्" इति । अस्मिन् पक्षे धामेति नामान्तरम्, ज्योतिरितिचार्थः ॥ ६२ ॥

**[ ६३. पवित्रम् ]** ईदृग्गुणविभवरूपनिरूपकसोपानेन तन्निरूप्यं स्वरूपमनुप्रविशति "पवित्रम्" । पुवः "अर्तिलूधूसूखनसहचर इत्रः" इतीत्रप्रत्ययः "कर्तरि चर्षिदेवतयोः" इति वा ॥ ६३ ॥

**[ ६४. मङ्गलं परम् ]** समस्तहेयप्रत्यनीकं "मङ्गलं-परम्"। मङ्गिर्गत्यर्थः, 'मङ्गेरलच्'। स्वयंप्रभानन्दतया कल्याणैकतानम् । परमित्यानन्त्यपरम् । सत्यपि नैसर्गिकनित्यनिरवधिक निस्सीमनिरसंख्यस्वगुणविभवानुभववैभवे सदातने, स्वत एवाशेषदोषपरिपन्थिशान्तानन्तानुपमानुकूलतमस्वयंप्रभात्मानुभव निबन्धननिरङ्कुशानन्दन्यकृतनिस्तरङ्गस्तिमितामृतमहोदधिन्यायया परावस्थयैव सर्वनिरपेक्षो नित्यतृप्तश्चेति शक्यनिरूपणो भगवान्। न्यरूपि च 'आनन्दमयोऽभ्यासात्' 'आनन्दादयः प्रधानस्य' 'अक्षरधियां त्ववरोधः' इत्यादौ। अवादि च "सत्यं ज्ञानमनन्तम्' 'आनन्दो ब्रह्म' 'शान्तिसमृद्धममृतं" 'यत्र लक्षयेच्छान्तमनुद्घातमतरङ्गन्तृप्तममृतं परं ब्रह्म, तत्र धारयेदित्येषा नैष्ठिकी धारणा" "अतरङ्गमनिर्देश्यमपदानन्दलक्षणम्" इत्यादिभिः । ज्ञप्तिमात्रैकरसवादस्तु, अखण्डखण्डने शतशः खण्डितः। संविदानन्दशक्त्यैश्वर्यादिगुणकोऽपि, अतिवेलमानुकूल्येन स्वयं स्वस्मै प्रकाशत इत्यस्य ज्ञानानन्दव्यपदेशः; न तु ज्ञप्तिसुखमात्रतया । यथा मणितरणिदीपादिकं स्वप्रभाविषयं प्रकाशयति, स्वयं च तदनपेक्षं प्रकाशते, ततस्तेजस्तेजस्वीति च व्यपदिश्यते । एवम्, अयं स्वगुणेन ज्ञानेन सर्वमपरोक्षयति, तदनपेक्षश्च स्वयं प्रकाशते, ज्ञानं ज्ञातेति च व्यपदिश्यते । "तद्गुणसारत्वात् तद्व्यपदेशः प्राज्ञवत्" इति न्यायेन वा ज्ञानादिव्यपदेशः। एवं च 'सत्यं ज्ञानम्' 'यस्सर्वज्ञस्सर्ववित्' इत्यादयो न परस्परमुपरुन्ध्युः। तथा वार्ष्गण्याध्यात्मे जीवप्रसंगे "यथा जीवः प्रशान्तात्मा

ह्रस्वो वा यदि वा महान् । ज्ञानात्मानं तथा विद्यात्पुरुषं सर्व जन्तुषु । सोऽत्र वेदयते वेद्यम्' इति ॥६४॥

**[ ६५. ईशानः]** निमीलदुन्मीलदीदृशस्वरूपेभ्यो बद्धमुक्त-नित्येभ्योऽस्य व्यावृत्तिः कीर्त्यते 'ईशानः' । 'ताच्छील्य' इत्यादिना चानश् । सर्वावस्थस्वपरसमस्तवस्तुव्यवस्थापनस्वभाव इत्यर्थः । यथा 'तमीश्वराणां परमं महेश्वरम्' 'स्वाभाविकी ज्ञानबलक्रिया च" 'न तस्य कश्चित्पतिरस्ति लोके न चेशिता नैव च तस्य लिङ्गम् । स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता नचाधिपः' 'सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः, स न साधुना कर्मणा भूयान् नो एवासाधुना कनीयान् । एष सर्वेश्वर एष भूताधिपति-रेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय' 'स वा अय-मात्मा सर्वेषां भूतानामधिपतिः सर्वेषां भूतानां राजा" 'एक इन्द्राजा जगतो बभूव" ' स ईशोऽस्य जगतो नित्यमेव नान्यो हेतुर्विद्यते ईशनाय' 'ईश्वरस्सर्वभूतानाम्' 'ईशते भगवानेकस्सत्यमेतद्-ब्रवीमि ते' 'परमात्मा च सर्वेषामाधारः परमेश्वरः इत्यादि । अतः कल्पनोपाधिपरिणामसव्याजैश्वर्यसार्वज्ञ्यादिकं जल्पद्भ्यस्त्रि-स्तिलजलाञ्जलिः ॥६५॥

**[ ६६. प्राणदः ]** अस्यैश्वर्यस्य प्रथमं विषयं विवक्षति प्राणदः" । प्राणं ददातीति कः, सूरिभ्यः सदादर्शनरूपस्वानुभव-परिचरणानुकूलबलद इतिभावः । यथा "य आत्मदा बलदाः" "सदेवः प्राण आविशति" इत्यादि ॥ ६६ ॥

( ६७. प्राणः ) तेषां 'प्राणः' तज्जीवनहेतुश्च; यथा 'ततो देवानां निरवर्ततासुरेकः' "को ह्येवान्यात् कः प्राण्यात्" 'प्राणो रक्षति विश्वमेजत्" 'प्राणस्तथाऽनुगमात्'। अत्रोभयत्र निपुणोन्नेयान्युदाहरणानि। 'अथैनमेते देवाः प्राणा अमृता आविशन्ति' 'तदेतदक्षरं ब्रह्म स प्राणस्तदु वाङ्मनः' 'सत्यात्मप्राणारामं मन आनन्दम्' 'मनोमयः प्राणशरीरो भारूपस्सत्यसंकल्पः' श्रीपौष्करे 'अथोपकरणं दिव्यं पञ्चशक्त्युपलक्षितम्। कालज्ञानक्रियेच्छाख्यप्राणसंज्ञं महामते। प्राणशक्तेस्तु चाध्यात्मं षाड्गुण्यमखिलं हि यत्। अधिदैवतमब्जाक्षो वासुदेवः सनातनः' इति, 'ज्ञानक्रियेच्छाप्राणाख्यं शक्तिव्यूहं द्विजाच्युतम्' इति च ॥६७॥

( ६८. ज्येष्ठः ) "ज्येष्ठः"। प्रशस्यशब्दादिष्ठनि 'ज्य च' इति ज्यादेशः। स्वेन सूरिभिश्च सर्वदा सर्वथाऽनुभवेऽपि, अदृष्टपारमहाविभूतित्वेन प्रशस्यतमः। यथा 'भगवान् वासुदेवो ज्यायसी विभूतिः' इति। 'ब्रह्मैव भूतानां ज्येष्ठम्' वृद्धतमो वा, सर्वेभ्यः पूर्वभावित्वात्। 'वृद्धस्य च' इति ज्यादेशः। सभापर्वणि 'एष प्रकृतिरव्यक्तः कर्ता चैव सनातनः। परश्च सर्वभूतेभ्यस्तस्माद्वृद्धतमोऽच्युतः' इति ।६८॥

( ६९. श्रेष्ठः ) तैस्सदानुभवप्रीत्या स्तोत्रैः परिचर्यमाणः "श्रेष्ठः"। 'प्रशस्यस्य श्रः"। यथा 'तद्विप्रासो विपन्यवो जागृवांसस्समिन्धते। विष्णोर्यत् परमं पदम्" इति। विपन्यवः स्तुति

शीलाः । सर्वदास्योपलक्षणं चैतत् । "तस्मै देवा उपासते" 'तस्मै' तच्छेपभूताः सन्तस्तमुपासते सेवन्त इत्यर्थः ॥६६॥

**( ७०. प्रजापतिः )** के ते कश्च तैस्सम्बन्धः ? तत्राह "प्रजापतिः" । बद्धमुक्तेभ्यः प्रकृष्टतया जायन्ते भवन्तीति प्रजाः सूरयः । यथा "रश्मिं रश्मीनां मध्ये तपन्तमृतस्य पदे कवयो निपान्ति" "यमन्तः समुद्रे कवयो वयन्ति तदक्षरे परमे प्रजाः" "यस्मिन् देवा अधिविश्वे निपेदुः" । "अधिरीश्वरे" 'यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी' 'अधिब्रह्मदत्ते पाञ्चालाः' इतिवत्, तेन नाथवन्तस्सन्तीत्यर्थः । 'यो देवेष्वधिदेव एक आसीत्' 'यत्र पूर्वे साध्याः सन्ति देवाः' 'यत्र ऋषयः प्रथमजा ये पुराणाः' 'सदा पश्यन्ति सूरयः' 'मध्ये वामनमासीनं विश्वे देवा उपासते' इत्यादिभिः श्रूयमाणाः, तेषां पतिः स्वामी नित्यपरिचरणीयः ॥७०॥

**[ ७१. हिरण्यगर्भः ]** उचितेन देशेन विशिनष्टि 'हिरण्यगर्भः' । निर्दोषनिरवद्यनित्यपरमसत्त्वात्मकद्रव्यविशेषत्वेन हिरण्यसाम्यात्, हितं रमणीयमितिवा, हिरण्यं परमं धाम । तस्य गर्भभूतः, तत्र नित्यनिवासात् । तद्विषये हि श्रूयते 'हिरण्मये परे लोके विरजं ब्रह्म निष्कलम् । तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः । न तत्र सूर्यो भाति' इत्यादि । 'देवानां पूरयोध्या तस्यां हिरण्मयः कोशः' 'पुरं हिरण्मयीं ब्रह्मा विवेशापराजिताम्' इत्यादि ॥७१॥

**( ७२. भूगर्भः )** अथ तत्र दिव्यमहिषीकत्वम् 'भूगर्भः' भूः–भूमिः, भगवती ह्रीक्षमाद्यपरपर्याया, सदाऽनुभवेन भरणीया गर्भभूताऽस्येति । आमनन्ति हि ताम्, 'महीं देवीं विष्णुपत्नीमजूर्याम्' 'उद्धृताऽसि वराहेण' इत्यादौ । श्रीविष्णुस्मृतौ विस्तरः ।७२।

**( ७३. माधवः )** 'माधवः' मायाः–श्रियः, धवः स्वामी, श्रियः पतिः । यथा 'अस्येशाना जगतो विष्णुपत्नी' 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' । अस्याः स्वरूपवत्, नित्यनिर्मलरूपत्वं, निरुपाधिकपरमैश्वर्यादि, जगन्मातृत्वम्, औत्पत्तिको भगवत्संबन्धो नित्यानपायश्चेत्यादि, तत्त्वपरेषु शास्त्रेष्वमर्यादम् । वेदेषु तावत्, श्रीसूक्तम्,श्रद्धासूक्तम्, मेधासूक्तम्, उत्तरनारायणम्, कौषीतकीब्राह्मणम्, इत्यादौ । वैष्णवे, "नित्यैवैषा जगन्माता विष्णोः श्रीरनपायिनी । यथा सर्वगतो विष्णुस्तथैवेयं द्विजोत्तम" इत्युपक्रम्य, अमृतमन्थन इन्द्रस्तवादिर्विस्तीर्णः । ब्राह्मे "तच्छक्तिर्दुर्जया भीमा विष्णुशक्तिरिति स्मृता । सर्वभूतहृदब्जस्था नानारूपधरा परा ॥ प्राणाख्या मन्त्रमाता च विश्वस्य जननी ध्रुवा" इत्युपक्रम्य "देवी भिन्नाञ्जनश्यामा निर्गुणा व्योम एव हि" इत्युक्तम् । "तथैवैका परा शक्तिः श्रीस्तस्य करुणाश्रया । ज्ञानादिषाड्गुण्यमयी या प्रोक्ता प्रकृतिः परा ॥ एकैव शक्तिः श्रीस्तस्य द्वितीया परिवर्तते । परावरेण रूपेण सर्वाकारा सनातनी ॥ अनन्तनामधेया च शक्तिचक्रस्य नायिका । जगच्चराचरमिदं सर्वं व्याप्य व्यवस्थिता' 'महाविभूतेः संपूर्णषाड्गुण्यवपुषः प्रभोः । भगवद्वासु-

देवस्य नित्यैवैषाऽनपायिनी । एकैव वर्तते भिन्ना ज्योत्स्नेव हिम-दीधितेः । सर्वशक्त्यात्मिका चैव विश्वं व्याप्य व्यवस्थिता ॥ सर्वैश्वर्यगुणोपेता नित्यं तद्धर्मधर्मिणी । प्राणशक्तिः परा ह्येषा सर्वेषां प्राणिनां भुवि । शक्तीनां चैव सर्वासां योनिभूता परा कला" इत्यादि लक्ष्मीसहस्रादि च लेख्यम् । तत्रैव, "यस्माल्ल-क्ष्म्यंशसंभूताः शक्तयो विश्वगाः सदा । कारणत्वेन तिष्ठन्ति जगत्यस्मिंस्तदाज्ञया । तस्मात्प्रीता जगन्माता श्रीरस्याच्युत-वल्लभा । सुप्रीताः शक्तयस्तस्य सिद्धिमिष्टां दिशन्ति च" । वैष्णव स्मृतिधर्मेषु चैतद्विषयमशेषम् । श्रीरामायणञ्च कात्स्न्येन, यथा— "काव्यं रामायणं कृत्स्नं सीतायाश्चरितं महत्" इति । 'श्रद्धया देवो देवत्वमश्नुते" इत्येतदस्यास्तत्त्वरहस्यम् ॥७३॥

[ ७४. मधुसूदनः ] एवं सर्वनिर्वाहकत्वादसुरनिरस-नादिना निष्प्रतिपक्षलक्ष्मीकत्वाच्च 'मधुसूदनः' । नन्द्यादित्वाल्ल्युः । एवं, नन्दनः, वर्धनः, मदनः, संकर्षणः, जनार्दनः, इत्यादयो ल्युप्रत्ययान्ताः । "सर्वतत्त्वनयनाच्चैव मधुहा मधुसूदनः" इत्यार्ष-निरुक्तम् । आत्मनि नित्यानन्तरायतया सूरिजनकरणोपसंहर्तृ-त्वाद्वा; "मधुरिन्द्रियनामा स ततो मधुनिषूदनः" इत्यादि ॥७४॥

[ ७५. ईश्वरः ] अपारेऽपि परभोगभूमावप्रतिहतस्वेच्छः 'ईश्वरः' । यथा "सत्यकामः सत्यसङ्कल्पः" "यत्र कामगमो वशी" इत्यादि ॥ ७५ ॥

[ ७६ विक्रमी ] इच्छाप्रतिहन्तृप्रसक्तिपरिपन्थिस्वभाव-श्चाह 'विक्रमी' इति । भूमप्रशंसानित्ययोगाद्यर्थं इनिः । यथा—"मनसैव जगत्सृष्टिं संहारं च करोति यः । तस्यारिपक्षक्षपणे क्रियानुधर्मविस्तरः" इत्यादि ॥ ७६ ॥

( ७७ धन्वी ) अथेदृशनिरतिशयपौरुषानुरूपं दिव्यं शार्ङ्गं धनुर्नित्यमस्येति 'धन्वी' । व्रीह्यादित्वाद्यथोक्तार्थे इनिः । सर्वदिव्यायुधप्रदर्शनं चैतत् । यथा, "शार्ङ्गधन्वा हृषीकेशः पुरुषः पुरुषोत्तमः । अजितः खड्गधृग्विष्णुः कृष्णश्चैव बृहद्बलः" "शरा नानाविधाकारा धनुरायतविग्रहम् । अनुव्रजन्ति काकुत्स्थं सर्वे पुरुषविग्रहाः" "ततो राजन्भगवानुग्रधन्वा नारायणः प्रभवश्चाप्ययश्च" 'भूतादिमिन्द्रियादिश्च द्विधाऽहङ्कारमीश्वरः । बिभर्ति शङ्खरूपेण शार्ङ्गरूपेण च स्थितम्" इत्यादि ॥ ७७ ॥

( ७८ मेधावी ) 'मेधावी' निस्सीमनित्यभूमानुगुण-सहजसार्वज्ञ्यः । "अस्मायामेधास्रजो विनिः" इत्युक्तार्थे विनिः ॥ ७७ ॥

( ७९ विक्रमः ) विना—पतगपतिना त्रयीमयेन क्रमणं-तत्र तत्र स्वेच्छया विहारगतागतमस्येति 'विक्रमः' । यथा "तत्पुरुषाय विद्महे सुवर्णपक्षाय धीमहि । तन्नो गरुडः प्रचोदयात्" 'तस्य"—महापुरुषस्य "पुरुषः" शेष इत्यर्थः । सौपर्णसूक्तादिषु चास्य तत्त्वं द्रष्टव्यम् ॥ ७९ ॥

[८० क्रमः ] ईदृश्या नित्यविभूत्याऽत्यन्तास्फीतः 'क्रमः' । क्रमिरात्मनेपदित्वात्तायनार्थः । तायनं स्फीतता ॥ ७० ॥

[ ८१ अनुत्तमः ] अतः 'अनुत्तमः' । यथा "तस्माद्धान्यन्न परं किञ्चनास" "तेनार्हति ब्रह्मणा स्पर्धितुं कः" "तेन कोऽर्हति स्पर्धितुम्" 'मत्तः परतरन्नान्यत्किञ्चिदस्ति धनञ्जय' "परं ह्यपरमेतस्माद्विश्वरूपान्न विद्यते" इत्यादि ॥ ७१ ॥

[ ८२ दुराधर्षः ] अतः 'दुराधर्षः'—गाम्भीर्यातिशयेनाम्भोधिवदनभिभवनीयः : यथा "मनोमयः प्राणशरीरो भारूपस्सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वगन्धस्सर्वरसस्सर्वमिदमभ्यात्तोऽवाक्यनादरः" "गम्भीरः परमो देवः" "महोदधिमिवाक्षोभ्यम्" "गाम्भीर्यात्सागरोपमम्" इत्यादि च ॥

तदनेन प्रघट्टकेन "तद्विष्णोः परमं पदम्" 'तदक्षरे परमे व्योमन्" "ते ह नाकम्" "तद्धाम परमं मम" "दिव्यं स्थानमजरञ्चाप्रमेयम्" "स्वर्लोकमागच्छ गतज्वरश्चिरम्" "विवेश वैष्णवं तेजः" "कलामुहूर्तादिमयश्च कालो न यद्विभूतेः परिणामहेतुः" "तेषां तत्परमं स्थानम्" इत्यादिभिः पूर्वोदाहृतैश्च घुष्यमाणे कालातीतत्वाक्षरत्वापरिणामित्वतमोऽतीतत्वनित्यत्वापुनरावृत्तिस्थानत्वादिना, भगवत्स्वरूपगुणादिवत् "एकमेवाद्वितीयम्" "नासदासीन्नो सदासीत्तदानीम्" इत्येकत्वावधारणादिनिमित्तामनित्यत्वशङ्कामतीत्य वर्तमाने, वैष्णवे परमपदे, श्रीभूमिभ्यां दिव्यमहिषीभ्यां

सह कौपीतकीपर्यङ्कविद्याग्रगतदिव्यास्थानरत्ने, दिव्यपर्यङ्कोपरि, अनन्तवैनतेयविष्वक्सेनादिभिः पूर्वोपपादितैर्नित्यसिद्धैः परिचर्यमाणचरणारविन्दस्य भगवतः सर्वैश्वर्यापरपर्यायं सार्वभौमं सुराजम्भवमशेषवेदरहस्यमाविष्कृतम् । तथा, वायुप्रोक्तशैवे स्पष्टम् "वैकुण्ठे तु परे लोके श्रिया सार्धं जगत्पतिः । आस्ते विष्णुरचिन्त्यात्मा भक्तैर्भागवतैस्सह" इति । श्रीविष्णुतत्त्वे "पञ्चशक्तिमयो देवो बहिर्लोकेश्वरेश्वरः । आस्ते स्वानन्दभावेन परमव्योम्नि-सुस्थितः" इति च ॥ ७२ ॥

( ८३ कृतज्ञः ) अथ विस्मृतयथोक्तनिरुपाधिकदास्यनिर्ममत्वानामनाद्यविद्याध्यारोपितस्वातन्त्र्यप्रवृत्तानां संसारिणां 'कृतज्ञः'—आनुकूल्यलवं जानातीति । "आतोऽनुपसर्गे कः" । ब्रह्मज्ञः प्राणद इत्यादयोऽप्येवम् । यः खल्वाह "अपि चेत्सुदुराचारः............सम्यग्व्यवसितो हि सः" इति । न च प्रत्युपकारं पश्यतीदृशे । यथा "गोविन्देति यदाक्रन्दत्कृष्णा मां दूरवासिनम् । ऋणं प्रवृद्धमिव मे हृदयान्नापसर्पति" इति च ॥७३॥

[ ८४ कृतिः] तच्च तेषां सुकृतमस्मादेव प्रसन्नादिति 'कृतिः' । "अकर्तरि च कारके संज्ञायाम्" इत्यधिकारे स्त्रियां क्तिन्नन्तः । एवं भूतिसिद्धिप्रभृतयोऽपि । यथा "एष एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति" ॥ ७४ ॥

[ ८५ आत्मवान् ] तस्य कर्तारोऽप्यात्मानस्तदायत्तस्वरूपप्रवृत्त्यादिकतयाऽस्य स्वभूता इति 'आत्मवान्' ॥ ७५ ॥

[ ८६ सुरेशः ] फल्गुपदलिप्सूनां ब्रह्मादीनामपि संविधाता 'सुरेशः'। यथा ब्रह्मा "यस्य प्रसादादहमच्युतस्य भूतः प्रजासर्गकरोऽन्तकारी। क्रोधाच्च रुद्रः स्थितिहेतुभूतः" इत्यादि ॥७६।

[ ८७ शरणम् ] अविशेषेण सर्वेषां 'शरणम्'। शृणाते रक्षणार्थाल्ल्युट्। एवं करणं, कारणं, प्रमाणं, भावनः, इत्यादयोऽपि। निरुपाधिकः प्रापकः। यथा 'तं ह देवमात्मबुद्धिप्रसादं मुमुक्षुर्वै शरणमहं प्रपद्ये' 'निवासः शरणं सुहृद्गतिर्नारायणः' 'शरण्यं शरणं च त्वामाहुर्दिव्या महर्षयः' इत्यादि ॥८७॥

( ८८ शर्म ] शर्म सुखं परमप्राप्यं चेति 'शर्म'। तस्मादेव सुखार्थान्मनिन्। यथा 'सर्वगन्धस्सर्वरसः' 'कं ब्रह्म खं ब्रह्म' "आनन्दो ब्रह्म" इति ॥८८॥

( ८९ विश्वरेताः ] शरणशर्मप्रकारान्विवक्षति 'विश्वरेताः'—विश्वं कार्यमस्येति। स हि स्वज्ञानस्थानपरिचरणेदमर्थ्येन प्रजानां ज्ञानकर्मेन्द्रियादिकं विश्वं करोति यथा "एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी" "सप्तप्राणाः प्रभवन्ति तस्मात्" भवन्ति भावा भूतानां मत्त एव पृथग्विधाः" श्रीविष्णुतत्त्वे "विचित्रा देहसंपत्तिरीश्वराय निवेदितुम्। पूर्वमेव कृता ब्रह्मन् हस्तपादादिसंयुता" इति ॥८९॥

[ ९० प्रजाभवः ] सर्वाः प्रजास्तद्दत्तैस्तैरेवोपकरणैस्तस्मिन्भवन्ति—तदाभिमुख्ययोग्या भवन्तीति "प्रजाभवः"। अधि-

करणे "पुंसि संज्ञायां घः प्रायेण" इति घः। एवमाश्रमो नियमो यम इत्यादयः ॥६०॥

[ ६१. अहः ] न हीनोऽस्यास्तीति 'अहः'। 'अहरहीनम' इति मौलं निरुक्तम् । "न हि कल्याणकृत्कश्चिद् दुर्गतिं तात गच्छति" इति । अनाद्यविद्यानिद्रावधौ स्वावबोधहेतुत्वाद्वा अहरिवेति 'अहः' ॥६१॥

( ६२. संवत्सरः ) एवं प्रबुद्धेषु समुद्धरणाय संवसतीति 'संवत्सरः'। वसेः "संपूर्वाच्चित्" इति सरन्प्रत्ययः । "सस्यार्धधातुके" इति तकारः। यथा "ददामि बुद्धियोगं तं येन मामुपयान्ति ते" "तेषामहं समुद्धर्ता" इति । ॥ ६२ ॥

( ६३. व्यालः ) "आनयैनं हरिश्रेष्ठ दत्तमस्याभयं मया" इति प्रस्थानेन तानात्मसात्करोतीति 'व्यालः' "ला आदाने"। "आतश्चोपसर्गे" इति कप्रत्ययः ॥ ६३ ॥

( ६४. प्रत्ययः ) प्रतीयतेऽस्मिन्निति 'प्रत्ययः'। स हि तान् प्रत्याययति –विस्रम्भयति । यथा 'तं ह देवमात्मबुद्धिप्रसादम्' । श्रीविष्णुतत्त्वे "भूयो भूयोऽपि ते ब्रह्मन् विश्वासः पुरुषोत्तमः"। स्वयं च सभापर्वणि "यदि ते हृदयं वेत्ति यदि ते प्रत्ययो मयि । भीमसेनार्जुनौ शीघ्र न्यासभूतौ प्रयच्छ मे" इति ॥६४॥

( ६५. सर्वदर्शनः ) तेषां सर्वं स्वमहिमानं दर्शयतीति 'सर्वदर्शनः'। यथा 'तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम्'' "तस्यैष आत्मा विवृणुते तनूं स्वाम्" इति ॥६५॥

( ६६. अजः ) तेषां स्वप्राप्तिपरिपन्थि सर्वं स्वयमेव क्षिपतीति 'अजः'। "अज गतिक्षेपणयोः"। अच्। यथा "तेषामेवानुकम्पार्थमहमज्ञानजं तमः। नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता" "अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि" इत्यादि ॥ ६६ ॥

( ६७. सर्वेश्वरः ) समर्थानामसमर्थानां च सर्वेषां शरणागतानां विलम्बनं वैक्लब्यञ्च परिहर्तुमाशु तानश्नुत इति 'सर्वेश्वरः'। "अश्नोतेराशुकर्मणि वरट् च" इति वरट् उपधाया ईकारश्च। "विभीषणेनाशु जगाम सङ्गमम्" इति ॥ ६७ ॥

( ६८. सिद्धः ) तेषां स्वरूपेण 'सिद्धः'। निष्ठा। एवं प्रथितो हित इत्यादयोऽपि। नोपायैस्साध्यः। यथा "न्यास इत्याहुर्मनीषिणो ब्रह्माणम्" इति ॥६८॥

[ ६९. सिद्धिः ] उपायैरप्ययमेव सेध्यत इति 'सिद्धिः' यथा "यदिच्छन्तो ब्रह्मचर्यं चरन्ति" "यं पृथग्धर्मचरणाः पृथग्धर्मफलैषिणः। पृथग्धर्मैः समर्चन्ति तस्मै धर्मात्मने नमः" इति ॥ ६९ ॥

[ १०० सर्वादिः ] तेषां परावरसर्वपुरुषार्थमूलमिति 'सर्वादिः'। यथा "ये त्वां देवं ध्रुवं भक्ताः पुराणं पुरुषोत्तमम् । प्राप्नुवन्ति सदा कामानिह लोके परत्र च" "सर्वान् कामान्प्राप्नुवन्ते विशालान् त्रैलोक्येऽस्मिन् कृष्णनामाभिधानात्' इति ॥१००॥

इति श्रीहरितकुलतिलकश्रीवत्साङ्कमिश्र-
सूनोः, श्रीरङ्गराजदिव्याज्ञालब्धश्रीपरा-
शरापरनामधेयस्य, श्रीरङ्ग-
नाथस्य, कृतौ श्रीमन्नाम
सहस्रविवरणे भग-
वद्गुणदर्पणे
प्रथमं शतकं
॥ समाप्तम् ॥

---

[ १०१ अच्युतः ] तेभ्यः प्रपन्नेभ्यो नापगतः 'अच्युतः' "यस्मान्न च्युतपूर्वोऽहमच्युतस्तेन कर्मणा," "तस्याहं न प्रणश्यामि" "न त्यजेयं कथञ्चन" इति ॥ २०१ ॥

[ १०२ वृषाकपिः ] अच्युतमेव धर्मवराहत्वेन समर्थयते 'वृषाकपिः' । तथाऽऽपं निरुक्तम् "कपिर्वराहश्श्रेष्ठश्च धर्मश्च वृष उच्यते । तस्माद् वृषाकपिं प्राह काश्यपो मां प्रजापतिः" इति ॥२०२॥

**[ १०३. अमेयात्मा ]** अस्मिन् आश्रितानुग्रहस्रोतसि "अतो ज्यायांश्च पुरुषः" "भूयांश्चातो जनार्दनः" इति न्यायेन 'अमेयात्मा' इयानित्यपरिच्छेद्यस्वरूपः ॥ १०३ ॥

**[१०४. सर्वयोगविनिस्सृतः]** कथं ? 'सर्वयोगविनिस्सृतः' । सर्वैरपि शास्त्रलक्षणैः स्वमनीषिकापरिकल्पितैरपि योगैरुपायैर्विनिस्सृतः विशेषेण वेदपरमगुह्यैरिव निस्सृतः प्राप्तुं योग्यः सुग्रह इति वा । यथा "स्वबुद्धिमात्रनिर्ज्ञातः परमात्मा जगत्प्रभुः । स्वैश्वर्यानुभवप्रीतो ज्ञातारमनुसेवते" इति । श्रीपौष्करे, "यस्मात्सद्भक्तियुक्तानां प्रपन्नानां क्रमं विना । प्रसादमेति मन्त्रेशस्त्वचिराद्भावितात्मनाम् ॥ किं पुनर्वै क्रियाज्ञानसम्पूर्णानां तु पौष्कर । श्रद्धाभक्तिपराणां च बोधितानां च देशिकैः" इति । श्रीविष्णुतत्त्वे "नियुक्तं मनसा वाऽपि यदि गृह्णाति माधवः । किन्तु नोन्मूलितं दुःखमेतावदिति निश्चितः" इति ॥ १०४ ॥

**[ १०५. वसुः ]** तेष्वियतताऽप्यतिप्रीत्या वसतीति 'वसुः' वसेः "शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च" इति, उः ॥ १०५ ॥

**( १०६. वसुमनाः )** वसुनि निधाविव तेषु मनोऽस्येति 'वसुमनाः' "स महात्मा सुदुर्लभः" इति ॥ १०६ ।

**( १०७. सत्यः )** तेषु सत्सु साधुरिति 'सत्यः' । "तत्र साधुः" इति यत् ॥ १०७ ।

( १०८. **समात्मा** ) तेषु गुणादिभिर्निम्नोन्नतेष्वप्य-नालोचितविशेषमनाः 'समात्मा' । यथा 'समोऽहं सर्वभूतेषु' इत्यादि ॥ १०८ ॥

( १०६. **संमितः** ) तैः 'सम्मितः' । "घतिस्यति" इत्यादिनेकारः । अस्मद्धस्तस्थ इति सम्यक् परिच्छिन्नः । यथा 'ऊनषोडशवर्षो मे रामो राजीवलोचनः" "ममायं तनयो निजः" इति दशरथवसुदेवादिभिः ॥ १०८ ॥

( ११०. **समः** ) तेष्वपि परिचितापरिचिततीव्रमन्दसंवे-गित्वाद्यविगणय्य गौरवे सम इति 'समः' । 'सम ष्टम अवैकल्ये' इत्यौणादिकोऽकारः ॥ ११० ॥

( १११. **अमोघः** ) तेषामवितथस्पर्शः 'अमोघः' । यथा "अमोघं दर्शनं राम न च मोघस्तव स्तवः । अमोघास्ते भविष्यन्ति भक्तिमन्तश्च ये नराः" इति ॥ १११ ॥

( ११२. **पुण्डरीकाक्षः** ) "पुण्डरीकं परं धाम नित्यम-क्षरमव्ययम् । तद्भवान्पुण्डरीकाक्षः" इति 'पुण्डरीकाक्षः' । नित्यवैकुण्ठवासिनां दृष्टिभूत इत्यर्थः । यथा "दिवीव चक्षुरा-ततम्" इति ॥ ११२ ॥

( ११३. **वृषकर्मा** ) एवं प्रकृष्टस्याप्यस्यास्मदादीनामपि पूर्वोक्तदिशा श्रेयस्करत्वात् धर्मरूपमस्य कर्मेति 'वृषकर्मा' । ११३।

(**११४. वृषाकृतिः**) तथाऽऽकृतिरपीति 'वृषाकृतिः'। अथवा तापत्रयनिर्वापणसुधासेकशीतलचेष्टितचारुरूपत्वात् 'वृष कर्मा वृषाकृतिः'। "वृषु सेचने"। यथा श्रीसात्वते परध्याने 'विश्वमाप्याययन् कान्त्या पूर्णेन्द्वयुततुल्यया' श्रीपौष्करे "वपुषा सुन्दरेणैव दिव्येनाविकृतेन च। मुञ्चन्तमनिशं देहादालोकं ज्ञानलक्षणम्" "पूर्वकर्मानलार्तानां ध्यायिनां खेदशान्तये। वदनेन्दुचयोत्थेन ह्लादयन् गोगणेन तु"। इति। राजधर्मे, "ततो महति पर्यङ्के मणिकाञ्चनचित्रिते। ददर्श कृष्णमासीनं नीलं मेराविवाम्बुदम्" इति॥ ११३, ११४॥

(**११५. रुद्रः**) एवंविधरूपविविधचेष्टितद्रुतहृदयान् सानन्दबाष्पान् कुर्वन्, रोदयतीति 'रुद्रः'। "रोदेर्णिलुक्च" इति रक्प्रत्ययो णिलोपश्च। यथा श्रीविष्णुतत्त्वे, "आह्लादशीतनेत्राम्बुः पुलकीकृतगात्रवान्। सदा परगुणाविष्टो द्रष्टव्यस्सर्वदेहिभिः" इति॥ ११५॥

(**११६. बहुशिराः**] बहूनि शिरांसि परस्सहस्रं फणा अस्येति 'बहुशिराः'॥ ११६॥

(**११७. बभ्रुः**) तथाविधस्सन् बिभर्तीति 'बभ्रुः'। भृञः "कुर्भ्रश्च" इति कुप्रत्ययो द्वित्वं च। 'यस्य सा सकला पृथ्वी फणामणिशिखारुणा। बिभर्ति मालां लोकानाम्' 'योऽनन्तः पृथिवीं धत्ते शेखरस्थितिसंस्थिताम्' इति॥ ११७॥

(११८. विश्वयोनिः) इदमनन्तवपुषा सामान्यम् सर्वसाधारणं भक्तसंश्लेषविशेषार्थं व्यवस्थापयति 'विश्वयोनिः' इति, विश्वेषां भेजुषां स्वेन मिश्रयितेति । 'यु मिश्रणे' 'वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्' इति निप्रत्ययः ॥ ११८ ॥

(११९. शुचिश्रवाः) तदुक्तान्यवश्यं शृणोतीति'शुचिश्रवाः' । 'शुचीनि श्रावणीयानि शृणोमीह धनञ्जय । न च पापानि गृह्णामि ततोऽहं वै शुचिश्रवाः' इति । भक्त्युपहृतं हि शुचि । यथा "विदुरान्नानि बुभुजे शुचीनि गुणवन्ति च" इति । "धर्म्या रम्याश्चार्थवतीर्विचित्रार्थपदाक्षराः । शृण्वतो विविधा वाचो विदुरस्य महात्मनः । अकामस्यैव कृष्णस्य सा व्यतीयाय शर्वरी" इति ॥ ११९ ॥

(१२०. अमृतः) तेषां निरवधिकमाधुर्येण जरामरणवारणेन सदा सेवायामप्यतृप्तिकरत्वेन वा 'अमृतः' । यथा "अमृतस्येव नातृप्यन् प्रेक्षमाणा जनार्दनम्" इति ॥१२० ॥

(१२१. शाश्वतस्थाणुः) ईदृशशक्तिलेशेन खलु सागरसारेऽप्यमृतत्वमुपचर्यते । ततो विशेषमाह 'शाश्वतस्थाणुः' । स्वयं नित्यो भोक्तृभ्योऽनपहार्यश्च, अपुनरावृत्तिभोग्यत्वात् । अन्यद्ध्यमृतमनित्यं सकृत्सेव्यञ्च ॥ १२१ ॥

(१२२. वरारोहः) तस्मात् 'वरारोहः' वरम्—उत्कृष्टम्, आरोहणम् स्वप्राप्तिरस्येति । अन्यद्धि सर्वमवरम्, यथा

"एते वै निरयास्तात स्थानस्य परमात्मनः" इति। परव्यूहविभवात्मना त्रिविधं परं ब्रह्मेति भागवतसिद्धान्तः। तत्र परन्नाम, अकार्यं कार्यानश्चिछन्नपूर्णषाड्गुण्यमहार्णवोत्कलिकैकातपत्रीकृतनिस्सीमनित्यभोगविभूतिकं मुक्तोपसृप्यम् अनौपाधिकम् अवस्थानम्। व्यूहश्च, मुमुक्षुसिसृक्षया प्रदेयसृष्टिस्थितिलयाः शास्त्रतदर्थतत्फलानि ध्यानाराधने लीला चेतीदृशकार्योपयुक्तविभक्तपरगुणरूपव्यापारशीकरव्यूहनिर्वाहितलीलाविभूतिकं मुक्तिसाधकं चतुर्धाऽवस्थानम्। विभवश्च, तच्छायः सुरनरतिर्यगादित्वविभवसजातीय ऐच्छः प्रादुर्भाववर्गः। तथा च श्रीसात्त्वते "षाड्गुण्यविग्रहं देवं भास्वज्ज्वलनतेजसम्। सर्वतः पाणिपादं तत्" इत्युपक्रम्य "परमेतत्समाख्यातमेकं सर्वाश्रयं विभुम्। एतत्पूर्णं त्रयं चान्यत् ज्ञानाद्यैर्भेदितं गुणैः ।। विद्धयेतद्व्यूहसंज्ञं वै निःश्रेयसफलप्रदम्। मुख्यानुवृत्तिभेदेन युक्तं ज्ञानादिभिर्गुणैः ।। नानाकृति च तद्विद्धि विभवं भुक्तिमुक्तिदम्"। इति। तत्र प्रादुर्भावाः केचित् साक्षात्, यथा मत्स्यकूर्मादयः। अन्ये तु ऋष्यादिविशिष्टपुरुषाधिष्ठानेन, यथा भार्गवरामकृष्णद्वैपायनादयः। अपरे काले शक्त्यावेशेन, यथा पुरंजयादिषु। इतरे च व्यक्तिषु स्वयमेवावतीर्य यथा अर्चावतार इति चतुर्धा। ननु ब्रह्मादयोऽपि भगवत्प्रादुर्भावाः कल्प्यन्ताम्, तदभेदोपदेशात्। तदिदं जडजल्पितम्, अस्मदादेस्तृणादेश्च तत्प्रादुर्भावत्वप्रसङ्गात्। अस्ति हि सर्वस्याभेदव्यपदेशः "सर्वं खल्विदं ब्रह्म" इत्यादिः। नियमेन तेषां ब्रह्मादीनां भगवदवतारगणनास्वपरिगणनात्, देवमनुष्यादिवत्

सृष्टिप्रकरणेषु सृज्यतया परिगणनाच्च। प्रत्युत, तेषां प्रादुर्भावेभ्यो भेदव्यपदेशाः, प्रादुर्भावशब्दविलक्षणेन प्रादुर्भावान्तरशब्देन निर्देशा भगवद्विभूतिलेशोद्भवत्वतत्प्रादुर्भावविशेषाधीनवृत्तित्वादिव्यवहाराश्च, भगवच्छास्त्रेषु बहुलमुपलभ्यन्ते। (अत एव हि तेषां प्रादुर्भावेभ्यो भेदस्तद्विभूतित्वं च शास्त्रितम्।) श्रीपौष्करे तावत्, "ज्ञानोपदेष्टा भगवान् कपिलाख्यस्त्वधोक्षजः। विद्यामूर्तिश्चतुर्वक्त्रो ब्रह्मा वै लोकपूजितः॥ तदंशभूतो वै यस्य विश्वव्यञ्जनलक्षणः" इति ब्रह्मणः कपिलप्रादुर्भावं प्रति, यस्येति षष्ठ्या शेषत्वं 'तदंशभूतस्सन्—विश्वव्यञ्जनलक्षणः' इति तत्तज्ज्ञानप्रवर्तकतया तद्विभूतित्वं च व्यञ्जितम्। अंशशब्दश्चैतादृशः सविभूतिकस्य भगवतो विभूतिभूतैकदेशेषु मुख्यो व्याख्यातः, 'अंशो नानाव्यपदेशात्' इत्यत्र। तथा अनलशायिप्रादुर्भावं प्रतीतरस्य, "युगान्तेषु च संहारं यः करोति च सर्वदा। शङ्कराख्यो महारुद्रः प्रादुर्भावान्तरं हि तत्॥ देवस्यानलशायेवं सर्वाधःसंस्थितस्य च"। इति। अत्रान्तरशब्दो भेदवचनः, "इक्षुक्षीरगुडादीनां माधुर्यस्यान्तरं महत्" इतिवत्। प्रादुर्भावप्रादुर्भावान्तरयोर्लक्षणं च विविक्तमुक्तम्, 'प्रादुर्भावास्तु विज्ञेयाः स्वव्यापारवशात्तु वै। प्रादुर्भावान्तरास्तद्वदंशस्य तु वशादपि"॥ इति। अत्र "स्वव्यापारवशाद्" इति स्वासाधारणत्वम्, "अंशस्य तु वशादपि" इति तुशब्दादंशवशशब्दाच्च विशेषो विभूतिपारतन्त्र्यञ्च। पुनरपि तादृशलक्षणम्, "स्वभावमजहच्छश्वदाकारान्तरमाकृतेः। यत्तत्वमंशसंभूतं प्रादुर्भावान्तरं तु तत्"

॥ इति । तथा मुख्यौपचारिकविभागश्च, "प्रादुर्भावान्तरैस्सार्धं प्रादुर्भावैर्द्विजाखिलैः । अच्ययैः प्रभवाख्यैस्तु गौणमुख्यैस्सुरेश्वरैः" ॥ इति । तथा, मुमुक्षुभिः प्रादुर्भावानामाराध्यत्वं प्रादुर्भावान्तराणामाराधननिषेधश्च "यदैव कृतदीक्षाणामधिकारस्समर्पितः । अच्युताराधनानां तु निश्श्रेयसपदाप्तये ॥ तदैव प्रतिषिद्धं च देवतान्तरपूजनम् । व्यूहाद्वा विभवाख्याद्वा ऋते नान्यत्पुरोदितात् ॥ स्कन्दरुद्रमहेन्द्राद्याः प्रतिषिद्धास्तु पूजने । ज्ञात्वैवं भक्तिसाङ्कर्यं न कुर्यादेवमेव हि" इति । श्रीसात्वतसंहितायां तु महिषीभूषणपरिजनादेर्भोगोपकरणतया भगवद्विग्रहान्तर्भावः, कालविधिशिवादेर्लीलोपयिकसंसारोपकरणत्वं च, स्फुटीकृतम्, "इत्येतद्दैवताचक्रमङ्गमन्त्रगणान्वितम् । विग्रहे देवदेवस्य संक्षीणमवतिष्ठते ॥ वक्ष्ये भवोपकरणगीर्वाणगणमुत्तमम् । नानाविभवमूर्तीनां योऽवतिष्ठेत शासने ॥ कालोऽपि यन्नियन्ता च शास्त्रं नानाङ्गलक्षणम् । विद्याधिपतयश्चैव समुद्रस्सगणश्शिवः ॥ प्रजापतिसमूहस्तु इन्द्रः सपरिवारकः । मुनयस्सप्त पूर्वेऽन्ये ग्रहास्तारागणैर्वृताः । जीमूताश्चाखिला नागास्त्वप्सरोगण उत्तमः ॥ ओषध्यश्चैव पशवो यज्ञास्साङ्गाखिलास्तु ये । विद्या चैवापरा विद्या पावकश्चैव मारुतः ॥ चन्द्रार्कौ च रविसुधे इत्युक्तममलेक्षण ॥ चतुर्विंशतिसंख्यं च भवोपकरणं महत् । भवस्साक्षात्प्रधानस्तु व्यापको जडलक्षणः ॥ मन्त्रमन्त्रेश्वरन्यासात् सोऽपि पूज्यत्वमेति च" ॥ इति ॥ अतःश्रीजन्मरहस्ये चतुर्मुखादिप्रसङ्गः श्रीपौष्करे प्रादुर्भावविभूतितयाऽन्तर्भावनिबन्धनोऽनुसंधेयः । एवं च व्यामोह एव त्रिमूर्तिसाम्यपण्डित-

न्यायः पण्डितंमन्यानाम् । सर्वं चैतत् तत्र तत्र स्थापयिष्यते ॥ १२२ ॥

( १२३. महातपाः ) तत्र 'वरारोहः' इत्येतदन्तैर्नामभिः प्रायशः परत्वमुक्तम् । "किमेकं दैवतं लोके किंवाऽप्येकं परायणम्" इति प्राप्यप्रश्नयोस्तत्प्रतिवचनयोश्च प्रायेणामीष्वेव विश्रान्तिः । अथ "स्तुवन्तः कं कम्" इत्यादीनामुपायप्रश्नप्रतिवचनानामधिकारे व्यूहः । तत्र वासुदेवः परत्वेन व्याख्यातः । इदानीं संकर्षणः । 'महातपाः' 'यस्य ज्ञानमयं तपः" इति महत् पूज्यं ज्ञानम् अस्येति । षड्गुणा व्याख्यास्यन्ते । तेषु ज्ञानबले संकर्षणस्य गुणौ व्यूढौ, ज्ञानं च प्राचीनभवपरिश्रान्तिशान्तये संजिहीर्षालक्षणमत्र ॥ १२३ ॥

( १२४. सर्वगः ) धारणसामर्थ्यलक्षणेन बलेन आत्मवद् धारयन् संहृतान् सर्वान् गच्छतीति 'सर्वगः' । "अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः" । एवं संकर्षणाद्धि संकर्षणं नाम निरुच्यते ॥ १२४ ॥

( १२५. सर्ववित् ) अथ संहृतान् सिसृक्षुः प्रद्युम्नः सर्वकार्यं विन्दति सृष्ट्या लभत इति 'सर्ववित्' । इदमत्र जगत्क्रियाशक्त्युल्लासरूपमैश्वर्यम् ॥ १२५ ॥

( १२६. भानुः ) सर्वनिर्माणेऽप्यविकुर्वाणो भातीति 'भा-

नुः' । "दाभाभ्यान्नुः" इति नुः । "स एष स्वयमुद्बभौ" इति । इदमविकाराकारं वीर्यम् ॥ १२६ ॥

( १२७. विष्वक्सेनः ) अथ स्थापकोऽनिरुद्धो 'विष्वक्सेनः' । इनेन स्वामिना सह वर्तत इति सेना, सेश्वरेति यास्कः । अनेन रक्षकवन्तो जन्तवो विष्वञ्चोऽस्येति । इयमत्र सामर्थ्यशरीरा शक्तिः ॥ १२६ ॥

( १२८. जनार्दनः ) रक्षाप्रतिपन्नान् जनान् अनपेक्षोऽर्दयतीति "जनार्दनः" 'दस्युत्राणाज्जनार्दनः" इति । इदमनपेक्षालक्षणं तेजः । प्रतिमूर्ति गुणानां व्यवस्थेयम्, इयत्तामाविष्कारात्, भगवतस्सर्वत्रानावरणगुणत्वात् । मूले हि श्रूयते, "ज्ञानेनैश्वर्येण शक्त्येति सर्वो भगवतोऽन्यूनाः पूर्णा इति एष आत्मा चतुर्विधः सर्वज्ञः सर्वदर्शी सर्वेश्वरः सर्वशक्तिस्समृद्धिमान् वाऽप्रन्थिरनून आप्तो वशी स्वाधीनोऽनादिरनन्तो व्यपगतनिद्राभयक्रोधतन्द्रो व्यपगतेच्छातमःक्लमव्याधिनिर्दोषो निरनिष्टो निरवद्यो ये भगवन्तं वासुदेवमेवं विदुः, त एनं विदुः, ये नैनं विदुः, न ते विदुरिति, भगवान् वासुदेवो ऽनन्तएवापरिमितोऽनन्तत्वेनापरिमितत्वेन भवति" इति प्रतिपर्यायम् ॥ १२८ ॥

( १२९. वेदः ) पुनः संकर्षणस्य शास्त्रप्रदत्वमुच्यते 'वेदः' सृष्टिलम्भितकरणा विन्दति तस्मिन्निति । "हलश्च" इति घञ् । यथा "यो वै वेदांश्च प्रहिणोति तस्मै" । अतः "अभ्युपायः,आगमः,

पन्थाः, नेता, ब्राह्मणः, आचार्यः" इति संकर्षणाभिज्ञाः ॥ १२९ ॥

( १३०. वेदवित् ) वेदार्थं चाविशयविपर्यासं वेत्तीति "वेदवित्" । आह हि "वेदविदेव चाहम्" इति ॥ १३० ॥

( १३१. अव्यङ्गः ) तदङ्गैश्छन्दःकल्पादिभिः स्वकल्पितैरविहीनः 'अव्यङ्गः' ॥ १३१ ॥

( १३२. वेदाङ्गः ) वेदाश्चानन्तशाखा अस्य अङ्गं शरीरम् , अन्तरङ्गव्यञ्जकत्वादिति 'वेदाङ्गः' । यथा, "नावेदविन्मनुते तं बृहन्तं" "विधूनुते वेदमयं शरीरम्" इति । "श्रुतिस्मृती ममैवाज्ञा" दैवं पित्र्यं च कर्तव्यम्" "इति तस्यानुशासनम्" इति तदाज्ञात्वाद्वा 'वेदाङ्गः' ॥ १३२ ॥

( १३३. वेदवित् ) वेदैर्नेयत इति वेदः, तदर्थो धर्मः, तमनुष्ठापनेन विन्दतीति प्रद्युम्नः 'वेदवित्' । अतो एस्य "धर्मः, प्रद्योतयिता, प्रवर्तयिता" इति च निर्देशाः ॥ १३३ ॥

[ १३४. कविः ] स एव क्रान्तदर्शित्वान् 'कविः' । "कु शब्दे" दर्शनकर्मणोऽस्मादिन् ॥ १३४ ॥

[ १३५. लोकाध्यक्षः १३६. सुराध्यक्षः १३७. धर्माध्यक्षः ] क्रान्तदर्शित्वमेव त्रिभिरुपपादयति लोकाध्यक्षः, सुराध्यक्षः, धर्माध्यक्षः' इति । लोकाः—धर्माधिकारिणः, सुराः—तदाराध्या देवताः, धर्मः—तत्साधनं वैधम् । तेषामध्यक्षोऽकृताभ्या-

गमकृतविघ्रणाशपरिहारेण फलं दातुमनुसंधाताऽनिरुद्धः । अतोऽस्य, "धर्मज्ञः, उपायज्ञः, अध्यक्षः, सत्यसंधः, स एवास्य संविदन् ददाति" इति व्यपदेशाः ॥ १३५, १३६, १३७ ॥

[ १३८. कृताकृतः ] द्वौ च धर्मौ—संसारस्य प्रवर्तको निवर्तकश्च । तत्र प्रवर्तकस्यानित्यफलप्रदत्वेनोपचारात् 'कृतः'। निवर्तकस्य नित्यफलप्रदत्वेन 'अकृत' श्चेति, स एव कृताकृतः।१३८

[ १३९. चतुरात्मा ] इत्थं 'चतुरात्मा', वासुदेवः संकर्षणः प्रद्युम्नोऽनिरुद्ध इति ॥ १३९ ॥

[ १४०. चतुर्व्यूहः ] कथमेकस्य चातुरात्म्यम् ? तत्राह 'चतुर्व्यूहः' यथोक्तप्रयोजनेभ्यो ध्येयाराध्यव्यक्तये च समस्तव्यस्तेन गुणषट्केन तद्वयत्र्जकव्यवस्थितावयववर्णभूषणप्रहरणवाहनध्वजादिभिर्जाग्रदाद्यवस्थाचतुष्टयविशिष्टाभिर्मूर्तिभिश्चतुर्धा व्यूह्यत इति ॥ १४० ॥

[ १४१. चतुर्दंष्ट्रः ] व्यूहमूलेन परेण रूपेण 'चतुर्दंष्ट्रः' चतुर्दंष्ट्रत्वं महापुरुषलक्षणम् । यथा, "चतुर्दशसमद्वन्द्वश्चतुर्दंष्ट्रश्चतुर्गतिः" इति ॥ १४१ ॥

[१४२. चतुर्भुजः] तथा 'चतुर्भुजः' तथा हि परं रूपमाहुः, "चतुर्भुजमुदाराङ्गं चक्राद्यायुधभूषणम्" "तमसः परमो धाता शङ्खचक्रगदाधरः" "भुजैश्चतुर्भिस्समुपेतम्" इत्यादि ॥१४२॥

( १४३. भ्राजिष्णुः ) इदमेव यथोक्तं व्यूह 'भ्राजिष्णुः।' "भुवश्च" इत्यत्र चकारादिष्णुच् । उपासितृभ्यः प्रकाशनशीलः ।१४३

[ १४४. भोजनम् ] तैर्भुज्यते—सुखेनानुभूयत इति 'भोजनम्' ।। १४४ ।।

( १४५. भोक्ता ) स्वयमपि तदर्पितस्य प्रापणादेरमृतस्येव 'भोक्ता' । यथा "अश्नामि प्रयतात्मनः" "भोक्तारं यज्ञतपसाम्" इत्यादि ।। १४५ ।।

( १४६. सहिष्णुः ) तेषामाभिमुख्यात् प्रागूर्ध्वं च संचितानां बुद्धयाऽबुद्धया च सकलकरणैः सर्वदा सर्वथा च प्रचीयमानानां विधिनिषेधशासनातिलङ्घनात्मनां साधारणानाम् असाधारणानां च स्वावज्ञानिन्दादीनां सर्वंसहेन स्वेनापि दुःसहानां स्वभक्तविषयाणां चानवधिकानामपराधानां "सहिष्णुः" । "अलंकृञ् " इत्यादिना इष्णुच् । कुत इयती महती क्षमास्येत्याकाङ्क्षायाम्, शशिसलिलशीतलिमादिवत् स्वरूपप्रयुक्तत्वादित्येनं परस्ताच्छील्यादिविषय इष्णुच् प्रत्ययः । एवं व्यूहः ॥१४६॥

( १४७. जगदादिजः ) अथ विभवेषु त्रिमूर्तिमध्यावतारो 'जगदादिजः' जगदादिभूतासु त्रिमूर्तिष्वन्यतमत्वेन जात इति । "सप्तम्यां जनेर्डः" । एवं मेधजगदाग्रजादयोऽपि। यथा ब्रह्मा, "यस्य प्रसादादहमच्युतस्य भूतप्रजासर्गकरोऽन्तकारी । क्रोधाच्च-

रुद्रःस्थितिहेतुभूतो यस्माच्च मध्ये पुरुषः परस्तात्" इति । तथा उद्योगे देवाः, "गतिश्च नस्त्वं देवेषु पूर्वजो जगतः प्रभुः । रक्षार्थं सर्वभूतानां विष्णुत्वमुपजग्मिवान्" इति ॥१४७॥

( १४८. अनघः ) एवं संसारमध्ये जनित्वाऽपि 'अनघः' पापप्रतिस्पर्धी ॥ १४८ ॥

[ १४९ विजयः ] मूर्त्यन्तरयोरपि सृष्टिसंहारादिभिर्जगद्विजयोऽस्मादिति "विजयः" । यथा, "तदादर्शितपन्थानौ सृष्टिसंहारकारकौ" इति ॥ १ ९ ॥

[ १५० जेता ] तयोरपि "जेता" स्वाभिप्रायेऽवस्थापयिता ॥ १५० ॥

[ १५१ विश्वयोनिः ] तन्मुखेन विश्वस्य—कार्यप्रपञ्चस्यापि कारणम्—"विश्वयोनिः" ॥ १५१ ॥

[ १५२ पुनर्वसुः ] पुनस्तत्प्रभृतिषु देवेष्वन्तरात्मतया वसति चेति "पुनर्वसुः" । यथा, "देवानां बन्धुर्निहितं गुहासु" ब्रह्मा, "तवान्तरात्मा मम च येचान्ये देहिसंज्ञिताः" इति ॥१५२॥

( १५३ उपेन्द्रः ) अथादित्येषु जघन्यजः "उपेन्द्रः" अनुजत्वेनेन्द्रमुपगतः । यथा, "जघन्यजस्तु सर्वेषामादित्यानां गुणाधिकः । द्वादशैवादितेः पुत्राः शक्रमुख्या नराधिप ॥ तेषामवरजो विष्णुर्यत्र लोकाः प्रतिष्ठिताः" । "विष्णुरिन्द्रानुजोऽभवत्" इत्यादि ॥ १५३ ॥

( १५४. वामनः ) स एवेन्द्रसंत्राणाय बलिमखे—'वामनः'। "द्रष्टृन् स्वकान्त्या वामानि सुखानि नयति" इति श्रुतिः। "स वामनो दिव्यशरीरधृक्" इति ॥ १५४ ॥

( १५५. प्रांशुः ) तत्रैव 'प्रांशुः'। अश्नोतेः, "खरुशरु" इत्यादिनोप्रत्ययो नुमागमश्च,"सर्वव्यःपिने" इति मन्त्रवर्णात्। यथा "तोये तु पतिते हस्ते वामनोऽभूतवामनः। तस्य विक्रमतो भूमिं चन्द्रादित्यौ स्तनान्तरे॥ नभः प्रक्रममाणस्य नाभ्यां तौ समवस्थितौ"। "वामनो रक्षतु सदा भवन्तं यः क्षणादभूत्। त्रिविक्रमक्रमाक्रान्तत्रैलोक्यस्फुरदायुधः" इत्यादि। ईदृगपदानडिण्डिमाभिप्रायेण वेदः "इदं विष्णुर्विचक्रमे" "त्रीणि पदा विचक्रमे" "विचक्रमे पृथिवीमेष एतां क्षेत्राय विष्णुः" "त्रिर्देवःपृथिवीमिति प्रविष्णुः" इत्यादि ॥ १५५ ॥

( १५६. अमोघः ) नास्य व्यर्थोऽस्तीति 'अमोघः'। "अपरिमितप्रभावाय" इति तन्मन्त्रवर्णः, बलिवासवयोरविशेषेण कृतार्थीकरणात्। यथा "अनुग्रहं चापि बलेरनुत्तमं चकार यश्चेन्द्रपदोपमं क्षणात्। सुरांश्च यज्ञांशभुजः"। "यत्राम्बु विन्यस्य बलिर्मनोज्ञानवाप भोग्यान् वसुधातलस्थः। तथाऽमरत्वं त्रिदशाधिपत्यं मन्वन्तरं पूर्णमपेतशत्रुः" इत्यादि ॥ १५६ ॥

( १५७. शुचिः ) ईदृगुपकारेषु प्रत्युपकारनिरपेक्षत्वात् 'शुचिः'। इगुपधात् कित्। एवम् ऋषिरुचिप्रभृतयः।

यथा, "अस्पर्शश्च महान् शुचिः" इति ॥ १५७ ॥

( १५८. ऊर्जितः ) नमुचिप्रभृतिपरिपन्थिवधबन्धनाद् बलमूर्जोऽस्य संजातेति 'ऊर्जितः' । इतच् ॥ १५८ ॥

( १५९. अतीन्द्रः ) इन्द्रानुजत्वेऽप्यैश्वर्येणापदानेन तमतिक्रान्तः 'अतीन्द्रः' । यथा "अविदितविभवाय" इति तन्मन्त्रवर्णः । "अतिवाय्विन्द्रकर्माणम्" इति ॥ १५९ ॥

( १६०. संग्रहः ) अथ भक्तैरयत्नेन संगृह्यत इति 'संग्रहः' । "ग्रहवृदृनिश्चिगमश्च" इत्यप् ॥ १६० ॥

( १६१. सर्गः ) त्रिविक्रमक्रमणसुग्रहपादपद्मो ह्यसौ तेभ्यस्सृज्यत इति 'सर्गः' । "निसृष्टात्मा सुहृत्सु च" इति ॥१६१॥

( १६२. धृतात्मा ) एवमात्मदानेन धृता आत्मानोऽनेनेति— 'धृतात्मा' ॥ १६२ ॥

( १६३. नियमः ) तत्प्रतिबला बलिप्रभृतयोऽपि नियम्यन्तेऽनेनेति—'नियमः' "यमः समुपनिविषु च" इत्यप् ॥१६३॥

[ १६४. यमः ] एवमखिलमकण्टकानुकूलं यच्छतीति "यमः" । अच् । यथा, "यः पृथिवीमन्तरो यमयति" "य आत्मानमन्तरो यमयति" इति प्रतितत्त्वमन्तर्यामिब्राह्मणे । यथा, "यमो वैवस्वतो राजा यस्तवैष हृदि स्थितः । तेन चेदविवादस्ते मा गङ्गां मा कुरून् गमः" ॥ इति ॥ १६४ ॥

[ १६५. वेद्यः ] एवमाविर्भूय प्रकटितातीन्द्रियमहिमत्वात् सर्वैर्वेदितुं शक्यो 'वेद्यः' ॥ १६५ ॥

[ १६६. वैद्यः ] वेदितृभवभञ्जिनीं विद्यामधीते वेद वेति 'वैद्यः'। "तदधीते तद्वेद" इत्यण् । यथा, "मेरुमन्दरमात्रोऽपि"।

[ १६७. सदायोगी ] एवमत्र सततजागरूकः 'सदा-योगी'। यथा, "य एषु सुप्तेषु जागर्ति" इति ॥ १६७ ॥

[ १६८. वीरहा ] स्ववेदनविहन्तॄन् हैतुकवीरान् हत-वानिति 'वीरहा'। क्विप् । "ब्रह्मभ्रूणवृत्रेषु" इति नियमः प्रायिकः । एवं कामहा क्रोधहा भगहेत्येवमादयोऽपि । यथा, "असत्य-मप्रतिष्ठन्ते जगदाहुरनीश्वरम्" इति प्रक्रम्य, "तानहं द्विषतः क्रूरान् संसारेषु नराधमान् । क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु" इत्यादि ॥ १६८ ॥

[ १६९. माधवः ] अथ स्वविषयपरविद्याप्रवर्तनात् 'माध-वः'। यथा, "मा विद्या च हरेः प्रोक्ता तस्या ईशो यतो भवान् । तस्मान्माधवनामासि धवस्स्वामीति शब्दितः" ॥ इति । "मौनाद् ध्यानाच्च योगाच्च विद्धि भारत माधवम्" इति वा ॥ १६९ ॥

[ १७०. मधुः ] लब्धविद्येभ्यः स्वदमानत्वात् 'मधुः'। "मन ज्ञाने" । अस्मात् स्वाद्वर्थात् "फलिपाटिनमि" इत्यादिनोप्रत्यये धका-

रोऽन्तादेशश्च । यथा "मध्व उत्सः" इति "प्रियो हि ज्ञानिनोऽत्यर्थम्" इति च ॥ १७० ॥

[ १७१. अतीन्द्रियः ] अथ मधुरमधूदधिस्वरूपेऽस्मिन् गुणिन्युक्तपरव्यूहविभवहृदयं षाड्गुण्यं विवक्षन् स्वरूपं शोधयति "अतीन्द्रियः" ज्ञानोपकरणान्यतिक्रान्तः ॥ १७१ ॥

[ १७२. महामायः ] कथम् ? "महामायः" । महती–अप्रपन्ननिखिलजनमोहिनी तिरस्करिणीवन्मायास्येति । यथा, "गुणमायासमावृतः" इति । नेयं मृषा मायेति वक्ष्यते ॥ १७२ ॥

[१७३. महोत्साहः] ज्ञानमयादप्यकर्तुरलसोदासीनात् सांख्येश्वरात् व्यावर्तकमैश्वर्यं गुणमाह "महोत्साहः" । महान् उत्साहः उत्सहनं कर्तृत्वलक्षणमैश्वर्यम् अस्येति । अनेन खल्वयम्, अखिलकार्येष्वनन्यनियोज्यनिरङ्कुशस्वसंकल्पकणिकामात्रेण सर्वभोक्तॄणां भुक्ताभुक्तविचित्रकर्मतारतम्यानुगुणभोगतदुपकरणप्रकारपरिणामभेदभिन्नजगदपरिमितापूर्वरचनाचतुरसर्वशक्तिरपि स्वातन्त्र्येण यथा पुरतः स्वभावनियममनुरुन्धानः सर्वमाविष्करोति । एतच्छीकरपरमाणुरणिमादिर्ब्रह्मादौ विजृम्भते ॥ १७३॥

( १७४. महाबलः ) सहायापेक्षकर्त्रन्तरव्यावर्तकं महद् बलमस्येति–'महाबलः' । अनेन ह्ययमपरिमितक्रियोऽप्यनाकलितश्रमः स्वे महिम्नि तिष्ठन् अवधीरिताधारान्तरो दुर्वारव्यापारसंहतशक्तिसमुल्लासः शरीरमिव सकलं बिभर्ति । "बहुलयन् बहु-

क्षम्" इति च मौला: । एतल्लेशो जीवनसमीरणगिरिधरादौ ।१७४

[ १७५. महाबुद्धिः ] असर्वज्ञकारणमतव्यवच्छेद-माह । महज् ज्ञानमस्येति 'महाबुद्धिः' । इदं चास्याशेषदेशकाल-स्वभावविप्रकृष्टाविप्रकृष्टविषयं सार्वज्ञ्यात्, अविशयविपर्यासतया यथार्थम्, क्लेशकर्मविपाकाशयाद्यपरामर्शात् स्वाभाविकत्वान्नित्यं च, चक्षुरादिकरणनिरपेक्षं च, तदपेक्षं च स्वातन्त्र्येण, पुण्डरीकाक्ष-त्वशुचिश्रवस्त्वादेः । नच रूपरसादिग्रहणे करणनियमः, सर्वेण सर्वकार्यशक्तेः; सर्पोऽपि हि तिर्यङ्‌ङ् चक्षुषैव पश्यति शृणोति च, कथमिदं सर्वशक्तेः दुश्शकम् ।यथोक्तं जयायाम्, "सर्वतः श्रुतिमां-श्चासौ यथा दृक्श्रावकोरगः" इति । करतलामलकविलोकनव-दपरोक्षं च वैशद्यात्, अमोघं च सर्वनिर्वहणात् । यथा "विश्वत-श्चक्षुरुत विश्वतोमुखः" "पश्यत्यचक्षुस्स शृणोत्यकर्णः" । " सर्वतो-ऽक्षिशिरोमुखम्" इत्यादि । आहुश्च नाथमुनिमिश्राः, "यो वेत्ति युग-पत्सर्वं प्रत्यक्षेण सदा स्वतः" इति । यत् केचित् सर्वज्ञमवजक्षिरे, "एकेन तु प्रमाणेन सर्वज्ञो येन कल्प्यते । नूनं स चक्षुषा सर्वान् रसादीन् प्रतिपद्यते" इति । तद् बौद्धाद्यनुमितसर्वज्ञविषयम्; तत्प्र-करणात्, अन्यथा शास्त्रविरोधाच्च । "नित्यश्चेदर्थवादत्वं तत्परे स्यादनित्यता" इति शास्त्रीयसर्वज्ञत्वव्युदासनमतएवान्यपरोक्तं दु-रुक्तं वा; चक्षुःश्रवःप्रभृतिषु काकोलूकगृध्रादिषु मन्त्रसिद्धौषधतपः-प्रभावादिसंस्कृतेषु च करणानां ज्ञानकार्यव्यतिहारतन्त्रताप्रकर्षतार-तम्यदर्शनात् सार्वज्ञ्यशास्त्रस्यायोग्यार्थतापि दुर्वचा । गुणान्तर-

चित्र्येऽप्येषैव दिक् । अस्य लवो बद्धमुक्तनित्येषु चैतन्यम् ॥१७५॥

( १७६. महावीर्यः ) दधिभावमापद्यमानदुग्धादिकारणेभ्यो भेदकं सत्यपि हेतावविकारलक्षणं महद् वीर्यमस्येति 'महावीर्यः'। अगरुमृगमदकस्तूरिकाकुसुमामोदवत् संनिधिमात्रेण निर्मर्यादकार्यकारी ह्ययम् । यथा "तस्य सन्निधिमात्रेण गन्धः क्षोभाय जायते । मनसो नोपकर्तृत्वात् तथासौ परमेश्वरः" इति । एतद्गुणो योगीश्वरप्रभृतिष्वक्षोभ्यत्वम् ॥ १७६ ॥

( १७७. महाशक्तिः ) पशुपतिमतावगतोपादानशक्तिविकलनिमित्तमात्रव्यावर्तिका महती शक्तिरस्येति 'महाशक्तिः'। सा हि साधनग्रामविनियोगलक्षणा स्वशरीरैकदेशीकृतप्रकृतिपरिणामयोग्यतालक्षणा सत्याऽसत्या वा सामग्र्या सर्वदा सर्वसंपादिनी । ऊर्णनाभिप्रभृतेः कीटस्यापि निमित्तस्यैवोपादानशक्तिरतर्क्या, कथमियं सर्वज्ञशक्तिस्तर्क्या? अस्या विप्रुट् प्रधानदधिदुग्धादौ प्रतिक्षणपरिणामित्वम् ॥ १७७ ॥

(१७८. महाद्युतिः ) सहकार्यपेक्षकारणवैलक्षण्यकरं तदनपेक्षालक्षणं च तेजो महदस्येति 'महाद्युतिः'। यद् बाह्यान्तरतमोविरोधि स्वपरवर्गयोः क्रमेण रमणीयं भीषणं च भवति । अस्य विन्दुर्युमणिमाणिक्यादौ प्रकाशः । षट्सु चामीषु महत्त्वविशेषणेनैते गुणाः कलयैव परावरं कार्यकलापं प्रवर्त्याशेषेणालब्धामिषा महोदधाविव महौघा भगवत्यनन्ते मान्तीति निवेद्यते । अतिप्रथितेयं प्र-

क्रिया "पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" "तेजोबलैश्वर्यमहावबोधसुवीर्यशक्त्यादिगुणैकराशिः" "ज्ञानशक्ति-बलैश्वर्यवीर्यतेजांस्यशेषतः। भगवच्छब्दवाच्यानि विना हेयै-र्गुणादिभिः" इत्यादौ। भगवच्छास्त्राणि कार्त्स्न्येनेदमर्थानि। एषु षट्स्वेव सौशील्यवात्सल्यादयोऽगणितगुणाः केनापि प्रयोजनेना-न्तर्भाव्यन्ते ॥ १७८ ॥

( १७९. अनिर्देश्यवपुः ) एतत्षाड्गुण्यविग्रहत्वाद् 'अ-निर्देश्यवपुः'। यथा "षाड्गुण्यविग्रहं देवं भास्वज्ज्वलनतेजसम्" इति। मौलसंहितायां चैतद् व्यञ्जितम्। "बुद्धिमनोऽङ्गप्रत्यङ्गवत्तां भग-वति लक्षयामहे, शास्त्रशब्देभ्यो बुद्धिमान् मनोवानङ्गप्रत्यङ्गवान्" इति। निरुक्तं चैतत् "ये बुद्धिमनोऽङ्गप्रत्यङ्गवन्तो भवन्ति, साम-महाभौतिकास्ते भवन्ति, किमात्मिका नु खल्वियं भगवतो व्यक्तिः'-इति भौतिकत्वमाशङ्क्य, उत्तरयति 'भगवदात्मिकैवैषा भगवतो व्यक्तिः, यदात्मको हि भगवान्, तदात्मिकैवैषा; किमात्म-कश्च भगवान्? ज्ञानात्मकः ऐश्वर्यात्मकः शक्त्यात्मकः, यथा, अङ्गारः खादिरः शाल्मलो वा सुप्रदीप्तः सर्वतोऽग्निरेव स्यात्, यथा वा मधुपात्रं प्रपीयमानं सर्वतो मधुरमेव स्यात्, यथा वा सुव-र्णपिण्डो निघृष्यमाणः सर्वतः सुवर्णमेव स्यात्, यथा वा प्रासाद आलोक्यमानः सर्वतो दर्शनीय एव स्यात्, एवं भगवान् सर्व-तो ज्ञानमेव, सर्वत ऐश्वर्यमेव, सर्वतश्शक्तिरेव, यदिच्छेत्तद्भवेत्" इत्यादिना। एष एव पञ्चोपनिषद्विषयो वक्ष्यते। "शुद्धसत्त्वमयेन

श्वनेन कनकदलेनेव रत्नमुन्मील्यते पङ्क्षणी. नतु त्रिगुणमयेनेव निमील्यते" इति तत्त्वम् । वैष्णवे च, "रूपवर्णादिनिर्देशविशेषण-विवर्जितः" । निर्देशविशेषणम्—उपमानविशेषणम् , तद्वर्जितः—अनुपमवपुरित्यर्थः ॥ १७६ ॥

( १८०. श्रीमान् ) तदनुरूपया दिव्यभूषण संपदा नित्य-युक्तः 'श्रीमान्' ॥ १८० ॥

( १८१. अमेयात्मा ) इत्थं विविधगुणरूपानुरूपाम्भो-धिगम्भीरभावः 'अमेयात्मा' ॥ १८१ ॥

( १८२. महाद्रिधृत् ) अथ तदनुगुणयथेष्टविहारचेष्टितः 'महाद्रिधृत्' महान्तं मन्दरं मथने धृतवान् ॥ १८२ ॥ इषूणामास

( १८३. महेष्वासः ) तथा महान्—मनोहारी, इषूणमासः क्षेपः सिन्धुबन्धदशकन्धरवधादौ यस्य सः, 'महेष्वासः' ॥ १८३॥ ।

( १८४. महीभर्ता ) ललितधरणीभरणशीलः "महीभर्ता"

( १८५. श्रीनिवासः ) 'श्रीनिवासः' इति च मथनस-मानीतलक्ष्मीचाटुकारवक्षोऽधिरोपणादिदिव्यचेष्टापरम् ॥१८५॥

( १८६. सतां गतिः ) 'सतांगतिः' स्वच्छन्दचेष्टितैरपि प्रणतप्रियंकरः ॥ १८६ ॥

( १८७. अनिरुद्धः ) एवं निर्धूतनिरोधनिरवधिकजीव-लोकजीवातुदिव्यचेष्टितः—'अनिरुद्धः' । "अपरिमितचेष्टो भगवान-निरुद्धः" इति मौलाः ॥ १८७ ॥

( १८८. सुरानन्दः ) अस्यानिरुद्धस्यावतारकन्दस्य हंसावतारः । आप्तसखत्वेन सुरा आनन्दन्त्यस्मादिति 'सुरानन्दः' ।

( १८९. गोविन्दः ) तद्गवां स्तुतिगिरां विन्दः 'गोविन्दः' । "गवादिषु विन्देस्संज्ञायाम्" इति शः । तैः सुरैः स्तूयमानोपकारः ॥ १८९ ॥

( १९०. गोविदां पतिः ) गावः—वेदगिरः, तद्विदां ज्ञानिनां ज्ञानयज्ञाराध्यत्वेन पाता 'गोविदांपतिः' । यथा "हंसमूर्तिमथात्मानं ज्ञानयज्ञभुजं स्मरेत्" इति ॥ १९० ॥

( १९१. मरीचिः ) एवं जनुपाऽस्थानेभ्योऽपि जन्तुभ्यः प्रकाशितनिर्मलरूपः 'मरीचिः' । "मृकणिभ्यामीचिः" । मृङ् अत्र दीप्तिकर्मा । यथा "कुन्देन्दुस्निग्धकान्तिश्च" इति तद्धानम् ॥१९१॥ तद्ध्यानं

( १९२. दमनः ) कान्तिमन्दाकिनीभिः भवतापं दाम्यतीति 'दमनः' ॥ १९२ ॥

( १९३. हंसः ) क एवम् ? 'हंसः' । "हन्ता सञ्ज्ञानाम्" इति मौळाः । मनोहरं हन्ति—गच्छति, रमयत इति वा 'हंसः' पृषोदरादित्वात्साधुः । यथा, "सत्सत्त्वशुभाश्रयपरमहंसाय" इति ॥

[ १६४. सुपर्णः ] शोभनपर्णत्वात् संसारपारनयनाद्वा-'सुपर्णः' इति नैरुक्ताः ॥ १६३ ॥ १६४ ॥

( १६५. भुजगोत्तमः ) 'पद्मनाभोऽमरप्रभुः' इत्यत्र व्यूहपश्चिमोऽनिरुद्धः पद्मनाभ उक्तः । इह प्रादुर्भावप्रथमः पद्मनाभो विवक्ष्यते 'भुजगोत्तमः' । भुजगस्य-शेषस्य, उत्तमः-शेषी-अनन्तभोगपर्यङ्कशयनः । "मानसेऽनन्तशयने दिव्यबोधतनुर्विभुः ।" इति तद्ध्यानविधौ । आरण्यपर्वणि " सुष्वाप भगवान् विष्णुरप्शय्यामेक एव हि । नागस्य भोगे महति शेषस्यामिततेजसः ।।" वैष्णवे "भोगिशय्यागतश्शेते त्रैलोक्यग्रासबृंहितः ।" इति १६५।

( १६६. हिरण्यनाभः ) 'हिरण्यनाभः' ॥ १६६ ॥

( १६७. सुतपाः ) स एव-'सुतपा' श्च । तपो-ज्ञानम्, संहृतसाक्षि । तद्ध्याने, "दिव्यबोधतनुर्विभुः" इति ॥ १६७ ॥

( १६८. पद्मनाभः ) 'पद्मनाभ' श्च पूर्ववत् । हिरण्यनाभत्वपद्मनाभत्वे ब्राह्मोक्ते "कदाचित्तस्य सुप्तस्य नाभ्यां कामादजायत । दिव्यमष्टदलं भूरि पङ्कजं पार्थिवं महत् ॥ यस्य हेममयी दिव्या कर्णिका मेरुरुच्यते" । इति ॥ १६८ ॥

( १६९. प्रजापतिः ) तत्पद्मोद्भवप्रभृतीनाम्- 'प्रजा' नाम् 'पतिः' नायकः । नैमित्तिकप्रलयविषयं चैतद् द्रष्टव्यम् ।१६९

( २००. अमृत्युः ) अथ नृसिंहावतारः । 'अमृत्युः' मृत्युविरोधी मृत्युमृत्युत्वात् ॥ २०० ॥

इति श्रीहरितकुलतिलकश्रीवत्साङ्काचार्यसूनोः श्रीरङ्गराज-
श्रीपराशरभट्टस्य कृतौ श्रीविष्णुसहस्रनाम-
विवरणे भगवद्गुणदर्पणे
द्वितीयं शतकं
समाप्तम् ॥

---

## ॥ अथ तृतीयशतकप्रारम्भः ॥

( २०१. सर्वदृक् ) स एव सर्वान्–अनुकूलप्रतिकूलतटस्थान् यथार्हं नियन्तुं पश्यतीति 'सर्वदृक्' । "दृशेश्चेति वक्तव्यम्" इति क्विन् । "क्विन्प्रत्ययस्य कुः" । स हि सर्वतोमुखः ॥ २०१ ॥

( २०२. सिंहः ) क एवम् ? 'सिंहः' महानृसिंहसंहननः । "सिचेस्संज्ञायाम्" इति को नुमहौ च ॥ २०२ ॥

( २०३. संधाता ) रिपुद्विपनिष्पेषभीषणोऽपि 'संधाता' प्रणेयानां प्रह्लादप्रभृतीनां संश्लेषयिता ॥ २०३ ॥

( २०४. संधिमान् ) स च तैस्संधिर्नित्योऽस्येति 'संधिमान्' । नित्ययोगे मतुप् ॥ २०४ ॥

( २०५. स्थिरः ) तत्सन्धाने तदपचारदुर्विचाल्यत्वात् 'स्थिरः' । 'अजिरशिशिर' इत्यादिना किरच् प्रत्ययो निपात्यते । "भद्रम" इति हि तन्मन्त्रयर्णः ॥ २०५ ॥

( २०६. अजः ) स्तम्भसम्भवत्वेन इतरवन्न जायत इति 'अजः' । "अन्येष्वपि दृश्यते" इति डः । "न जायते जनित्र्यां यदजस्तस्मादनेकजित्" इति ॥ २०६ ॥

( २०७. दुर्मर्षणः ) प्रतीपैर्दुष्करं मर्षणमस्येति– 'दुर्मर्षणः' । "रथाङ्गशङ्खधातारं ब्रह्ममूर्तिं सुभीषणम्" इति तद्ध्यानम् ।

[ २०८. शास्ता ] एवं सर्वकण्टकं साधु शास्तीति "शास्ता" । तत्साधुकारिणि तृन् । "तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटौ" इत्यनिट् । यथा "निनादवित्रासितदानवः" "द्रवन्ति दैत्याः" इति ॥ २०८ ॥

[ २०९. विश्रुतात्मा ] "विश्रुतात्मा" स एव सर्वदा सर्वत्र सर्वैर्विस्मयेन श्रुतसैंहापदानस्वभावः । यथा "अशेषदेवेशनरेश्वरेश्वरैः" इत्यादि ॥ २०९ ॥

**[ २१०. सुरारिहा ]** स एव सुरारिं हिरण्यकशिपुमुरोविदारं हतवानिति "सुरारिहा" । यथा "सत्सत्त्व करजश्रेणीदीप्तेनोभयपाणिना । संयच्छते यथा सम्यक् भयानां सोऽभयं परम्" ॥ इति तद्व्याने ॥ २१० ॥

**[ २११. गुरुर्गुरुतमः ]** अथ मत्स्यावतारः, अशेषविद्यापरमाचार्यकः "गुरुः" । "स पूर्वेषामपि गुरुः" इति हैरण्यगर्भाः । "कृग्रोरुच" इति कुप्रत्यय उकारश्चान्तादेशः । तस्यैव विशेषणं "गुरुतमः" न स्वतन्त्रनामत्वमस्य, "पूज्यश्च गुरुर्गरीयान्" इति ॥२११॥

**[ २१२. धाम ]** संहारनश्वरचराचरबीजाधारनौकर्णधारत्वेन तदाश्रयत्वाद् "धाम" । धाम्नः "सर्वधातुभ्यो मनिन्" इति मनिन्प्रत्ययः ॥ २१२ ॥

**[ २१३. सत्यः ]** मन्वादिषु तत्कालसमाश्रितेषु सत्सु साधुरिति "सत्यः" । २१३ ॥

**[ २१४. सत्यपराक्रमः ]** तेषु सत्योऽकैतवः पराक्रमो वृत्तिरस्येति "सत्यपराक्रमः" ॥ २१४ ॥

**( २१५. निमिषः )** तद्विरोधिषु निमिषति न कटाक्षयतीति "निमिषः" ॥ २१५ ॥

**( २१६. अनिमिषः )** क एवम्? "अनिमिषः" सत्सु न निमिषति जागर्तीति "अनिमिषः" दिव्यमीनतनुः ॥ २१६ ॥

( २१७. स्रग्वी ) तिर्यक्त्वेऽपि परत्वसूचनी वैजयन्ती स्रगस्य नित्ययोगिनीति "स्रग्वी" । "अस्मायामेधास्रजो विनिः" इति विनिः । २१७ ॥

( २१८. वाचस्पतिः ) स एव श्रीमन्मात्स्यपुराणे वेदोपबृंहणाद् "वाचस्पतिः" । षष्ठ्या अलुक्, "षष्ठ्याः पतिपुत्र" इत्यादिना सत्वम् ॥ २१८ ॥

( २१९. उदारधीः ) एवं सर्वोपजीव्यसार्वज्ञ्याद् "उदारधीः" ॥ २१९ ॥

( २२०. अग्रणीः ) तेन प्रकारेणाग्रिमं पश्चिमं पदं नयतीति "अग्रणीः" ॥ २२० ॥

( २२१. ग्रामणीः ) तत्र च नित्यसिद्धानां ग्रामं समाजं नयतीति "ग्रामणीः" । "सत्सूद्विष" इत्यादिना क्विप् । "अग्रग्रामाभ्यां नयतेरिति वक्तव्यम्" इति णत्वम् ॥ २२१ ॥

( २२२. श्रीमान् ) "मत्स्यः कमललोचनः" इति स्पष्टपरविभूतिः "श्रीमान्" ॥ २२२ ॥

( २२३ न्यायः ) एवमर्थं पदेतुर्युक्तकारीति "न्यायः" । "परिन्योर्नीणोः" इत्यादिना घञ् ॥२२३॥

( २२४. नेता ) नियुक्तं करोतीति "नेता" निर्वोढृशीलः ।

न्याय्यं हि निमज्ज्य निस्तारणं महात्मनाम् ॥ २२४ ॥

( २२५. समीरणः ) एवमिष्टचेष्टः "समीरणः"। "ईर गतौ कम्पने च" । चलनशब्दार्थादकर्मकाच्च । एवं पवनादयोऽपि । उक्तार्थेषु 'कृत्वा मीनमयीं सद्यः प्रविवेश रसातलम् । वेदमूर्तिस्ततो वेदानानिन्ये ब्रह्मणोऽन्तिकम्" ॥ "ज्ञानदिगुणवृन्देन पत्रभूतेन भूषितम् । स्वोत्थब्रह्ममदं शृङ्गनिःसृतेन विराजितम्" ॥ "कल्पावसानसमये वहन्तं चैव चिन्तयेत् । नौरूपां विततां चोर्वीं प्रजापतिगुणान्विताम्" ॥ "मुक्ताफलनिभेनैव वपुषा निर्मलेन च । अनिमीलितनेत्रश्च मीनात्मा यतवाक् तथा" ॥ इति ॥ २२५ ॥

२२६. सहस्रमूर्धा २२७. विश्वात्मा २२८. सहस्राक्षः २२९. सहस्रपात् ] अथैतद्विशावतारोज्जीवितासु पुरुषसूक्तगाथासु परविद्यासु यथा प्रतिपाद्यते; तथाऽनुरूपाणि नामानि सहस्रमूर्धादीनि । "सहस्रमूर्धा" मूर्धाक्षिपादा ज्ञानकर्मोपकरणोपलक्षणार्थाः । सहस्रशब्दश्च तेषामसंख्येयत्वपरः "विश्वतश्चक्षुरुत विश्वतोमुखः" "सर्वतःपाणिपादं तत्" इत्यादिप्रकारात् । तैश्च तत्कार्यज्ञानक्रियानन्त्यं लक्ष्यत इत्यभियुक्ताः; औचित्याद् बहुशास्त्रसंगतेश्च ॥ आभ्यां ज्ञानशक्तिभ्यां विश्वव्यापनाद् "विश्वात्मा" यथा "स भूमिं विश्वतो वृत्वा" "येनैकं भूतस्तिप्रत्यन्तरात्मा" "येन सर्वमिदं प्रोतम्" "अहमात्मा गुडाकेश सर्वभूत" इत्यादि ॥२२६–२२९॥

[ २३०. आवर्तनः ] संसारघटीयन्त्रपरिवर्तनाद् "आव-

र्तनः" । यथा 'तेनेदं भ्राम्यते ब्रह्मचक्रम्' 'भ्रामयन् सर्वभूतानि' 'कालचक्रं जगच्चक्रं युगचक्रं च केशवः । आत्मयोगेन भगवान् परि-वर्तयतेऽनिशम्' इत्यादि 'तस्माद्विराडजायत' इत्यादिनापीदमेवोच्यते ॥ २३० ॥

(२३१. निवृत्तात्मा) ततस्संसारमहाविभूतेस्त्रिपाद्विभूतित्वेन निवृत्तमुद्गतं स्वरूपं यस्य सः "निवृत्तात्मा" । 'त्रिपादूर्ध्वं उदैत् पुरुषः' "परात् परं यन्महतो महान्तम्" इत्यादि ॥ २३१ ॥

[२३२. संवृतः] तस्यामवस्थायां "तमसः परस्तात्" इति तामसानां मूढानां गूढत्वात् 'संवृतः' ॥२३२॥

[२३३. संप्रमर्दनः] संवरणं तमः स्वविद्यया संप्रमर्दयतीति 'संप्रमर्दनः"। "तमेवं विद्वानमृत इह भवति" 'य एवं विदुरमृतास्ते भवन्ति अथेतरे दुःखमेवापियन्ति" इति ॥ २३३ ॥

[२३४. अहस्संवर्तकः] अहरुपलक्षितकालपरिवृत्तिहेतुः 'अहस्संवर्तकः' । ण्वुल् । "युवोरनाकौ" । "सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि" "कालचक्रम्" "कालस्य हि च" इति । कालो हि भूतभवद्भविष्यद्रूपेण परापरप्रत्ययहेतुर्नित्यं भगवत्क्रीडनकम् । स हि तं षड्विधविकारकारिणं प्रकृतिपुरुषसंयोजनवियोजनं नियच्छति । तमेके व्यवस्थितां प्रकृतेः परिणामपरम्परामाहुः; अपरे परमेश्वरचेष्टासमष्टिम्; अन्ये स्वतन्त्रम् । श्रीपौष्करे कथंचिन्नेयमुदाहरणम्—अध्यात्मं कालतत्त्वीयमधिदैवतमस्य वै । प्रभवाप्यय-

मूर्तिर्वै विश्वात्मा परमेश्वरः ॥ अधिभूतं परिज्ञेयं त्रैलोक्यं भूतपूर्वकम् । कालश्च व्यक्ततत्त्वस्य ह्यध्यात्मत्वेन वर्तते । अधिदैवतमिज्या च सद्भोगमधिभूतता" ॥ इति ॥ २३४ ॥

[ २३५. वह्निः ] देशरूपेण विश्वं वहतीति "वह्निः" । "वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्" इति निप्रत्ययः । प्रथमश्च देशः परमाकाशः; आपेक्षिकोऽन्यो गगनदिगादिस्तत्कोणे । यथा "अस्यामृतं दिवि" "स्वे महिम्नि स्थितम्" "पादोऽस्येहाभवत् पुनः" इत्यादि । देशो हि नाम "इहेदम्" इत्याद्यवगतिहेतुः । स च तद्दत्त एव बद्धमुक्तनित्येभ्यः ॥ २३५ ॥

[ २३६. अनिलः ] एवमेषामननादुज्जीवनाद् 'अनिलः" । "सलिकल्यनि" इत्यादिनेलच् । अस्य कलैव प्रसिद्धोऽनिलः । "प्राणाद्वायुरजायत" "को ह्येवान्यात् कः प्राण्यात्" इति ॥२३६॥

[ २३७. धरणीधरः ] अन्यदपि धारकं धारयतीति 'धरणीधरः" । "स दाधार पृथिवीं द्यामुतेमाम्" "उद्धृताऽसि वराहेण" "पृथिवीं चान्तरिक्षं च द्यां चैव पुरुषोत्तमः । मनसैव विसृष्टात्मा नयत्यात्मवशं वशी" ॥ इत्यादि ॥ २३७ ॥

[ २३८. सुप्रसादः ] स एवं संविधाय संमुखेषु 'सुप्रसादः" 'तमक्रतुं पश्यति वीतशोको धातुः प्रसादात्' "प्रसादपरमौ नाथौ मम गेहमुपागतौ" इत्यादि ॥ २३८ ॥

[ २३९ प्रसन्नात्मा ] तत्कारणम् "प्रसन्नात्मा" स्वत एवा-

वाप्तसमस्तकामतया रागाद्यनुपप्लुतमनाः । यथा "अविजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः" इति, "शान्तसमृद्धममृतम्" इति च । अपूर्णः कृपणो हि दुराराधः ॥ २३९ ॥

[ २४० विश्वसृक् ] गुणदोषमनपेक्ष्य दाक्षिण्याद् विश्वं सृजतीति "विश्वसृक्" ॥ २४० ॥

( २४१. विश्वभुग्विभुः ) तथैव व्याप्य भुनक्ति पालयतीति "विश्वभुग्विभुः" । एकं नाम । यथा "सर्वाणि रूपाणि विचित्य धीरः । नामानि कृत्वाऽभिवदन् यदास्ते" इति ॥२४१॥

( २४२. सत्कर्ता ) एवं सर्पीयोदण्डापूपिकया सतः "सत्कर्त्ता" । यथा "सज्जनप्रतिपूजकः" इति । २४२ ॥

[ २४३. सत्कृतः ] तैश्च 'सत्कृतः" । स हि तच्छ्रद्धार्पितेन स्वल्पेनापि स्वमहिमानुगुणेनेवाप्रतिपन्नप्रत्युपकारः परितुष्यति । "अहो ह्येकान्तिनः सर्वान् प्रीणाति भगवान् हरिः । विधिप्रयुक्तां पूजां च गृह्णाति शिरसा स्वयम्" ॥ "शबर्या पूजितः सम्यक्" "मालाकारेण पूजितः" इति ॥ २४३ ॥

( २४४. साधुः ) तदपेक्षितदूत्यसारथ्यादि साधयतीति "साधुः" । "कृवापाजि" इत्यादिना साधेरुण् । २४४ ॥

[ २४५ जन्हुः ) अभक्तेष्वात्ममाहात्म्यमपह्नुत इति

"जन्तुः" इति नैरुक्ताः । उद्योगे यथा "चक्रं तद्वासुदेवस्य मायया वर्तते विभोः । सापह्नवं पाण्डवेषु चेष्टते राजसत्तम" इति । २४५॥

( २४६. नारायणः ) एवमेभिरशेषैर्विशिष्योपनिषत्सु "नारायणाय विद्महे" "नारायण परं ब्रह्म" "एको ह वै नारायण आसीत्" "अथ पुनरेव नारायणः" 'चक्षुश्च द्रष्टव्यं च नारायणः' "अथ दिव्यो देव एको नारायणः" इति प्रतिशाखं परस्य वस्तुनो मूर्त्यन्तरव्यावर्तकतया निर्दिष्टमसाधारणं नामाह "नारायणः"। श्रौतनिरुक्तम् "यच्च किञ्चिद्" इति । अन्यदपक्षीणत्वान्नाचक्ष्महे ।

( २४७. नरः ) इदमेव गूढं व्याचष्टे "नरः" अनश्वरचिदचिद्विभूतिक इति ॥ २४७ ॥

( २४८. असंख्येयः ) तत्समूहाश्चास्यासंख्येया इति "असंख्येयः" ॥ २४८ ॥

[ २४९. अप्रमेयात्मा ) तेषामसंख्येयानामेकैकशोऽप्यप्रमेयानामनवधिकानामन्तर्बहिश्च व्यापनाद् "अप्रमेयात्मा"।

( २५०. विशिष्टः) स्वत एव तदनपेक्षवैलक्षण्यत्वाद् "विशिष्टः" ॥ २५० ॥

( २५१. शिष्टकृत् २५२. शुचिः ) अपि तु स्वसम्बन्धेन तान् स्वानुगुणकल्याणान् कुर्वन् अनाधेयदीप्तिः "शिष्टकृन्" 'शुचिः' ॥ ॥ २५१ २५२ ॥

( २५३ सिद्धार्थः) अथ यथोक्तोपपादनम् "सिद्धार्थः" स्वत एवावाप्तकामत्वात् ॥ २५३ ॥

( २५४. सिद्धसंकल्पः ) तदुपरि "सिद्धसंकल्प"श्च· स्वातन्त्र्येण प्रयुक्ततया स्वेच्छया साधितसर्वार्थ इत्यर्थः । "स· त्यकामः सत्यसंकल्पः" इति ॥ २५४ ॥

( २५५. सिद्धिदः ) अणिमगरिमाद्यास्सिद्धीस्साधके· भ्यो ददातीति "सिद्धिदः" ॥ २५५ ॥

[ २५६. सिद्धिसाधनः ] यस्य साधनमपि "ये तु धर्म्यामृतमिदम्" इति न्यायेनानुष्ठानवेलायामपि प्रियंकरत्वात् सिद्धिरूपम्, सः 'सिद्धिसाधनः" ॥ २५६ ॥

[ २५७. वृषाही ] निखिलमङ्गलाङ्कुरार्पणदिनत्वाद् वृष· रूपं धर्मरूपमहरस्य प्रथमाभिगमनदिवसम् 'वृषाहः' । 'राजाहः सखिभ्यष्टच्' । तदस्यास्तीति 'वृषाही' । यथा 'अद्य मे सफलं जन्म सुप्रभाता च मे निशा । यदुन्निद्राब्जपत्राक्षं विष्णोर्द्रक्ष्याम्यहं मुखम् ॥" " ता निशास्ते च दिवसाः" इत्यादि । 'यदा ह्येवैष एतस्मिन्नदृश्ये······ अथ सोऽभयं गतो भवति' इति च ॥ २५७ ॥

( २५८. वृषभः ) एवमभिगच्छतो भवदुःखान् वर्षतीति "वृषभः" । "ऋषिवृषिभ्यां कित्" इति वृषेरभच्प्रत्ययः किद्भावश्च ।

(२५९. विष्णुः) एवं वर्धन् वेवेष्टीति "विष्णुः"। 'वि
पॢ व्याप्तौ" "विषेः किच्च" इति णुः। तैस्तैरुपकारैरधिकेन भग-
वता न्यूनानां स्वव्यतिरिक्तानामविनाभावस्तार्किकप्रसिद्धोऽत्र व्या-
प्तिरभिमता। "न तदस्ति विना यत् स्यान्मया भूतं चराचरम्"
इति ॥ २५८–२५९ ॥

[२६०. वृषपर्वा] वृषा वर्णाश्रमधर्माः, ते तद्वारोहण-
सोपानपर्वाणीति 'वृषपर्वा' ॥ २६० ॥

[२६१. वृषोदरः] आराधकानां यथालब्धहविरादिभिस्सु-
पूरत्वेन सर्वार्तास्पदत्वेन वा धार्मिकोदरत्वाद् 'वृषोदरः" । २६१ ।

[२६२. वर्धनः] मातृवत् तानुदरे कृत्वा वर्धयतीति
"वर्धनः" ॥ २६२ ॥

(२६३. वर्धमानः) तान् वर्धयन् स्वयमपि वर्धत इति
वा, एवंप्रायैरपर्यवस्यत्समृद्धिरिति वा "वर्धमानः" ॥ २६३ ॥

(२६४. विविक्तः) एवं सर्वलोकोत्तरस्वैकान्तवृत्तान्त-
त्वाद् "विविक्तः" ॥ २६४ ॥

(२६५. श्रुतिसागरः) एवंप्रकारगुणप्रवणानां श्रुतीनां
सागर इव सरिदोघानां परमा पर्यवसानभूमिरिति "श्रुतिसागरः"।
"नारायणपरा वेदाः" "वेदैश्च सर्वैरहमेव वेद्यः" इति ॥ २६५ ॥

( २६६. सुभुजः ) प्रपन्नभरधुर्यशोभनभुजः "सुभुजः" ॥

( २६७. दुर्धरः ) तादृग्भुजबलेन संवर्तसमुद्रवेगो बालक्रीडासैकतसेतुभिरिव परैर्दुर्वारवेगो "दुर्धरः" । "ईषद्दुस्सुषु" इत्यादिना खल् ॥ एवं दुर्लभो दुर्गम इत्याद्योऽपि ॥ २६७ ॥

( २६८. वाग्ग्मी ) तथा प्रशस्यतया वागस्यास्तीति "वाग्ग्मी" । प्रशंसायां वाचो ग्मिनिः । प्रशस्यत्वं च वेदात्मकत्वाद्, जिम्वरमधुरगम्भीरप्रियहितत्वाच्च । यथा "वाग्विवृताश्च वेदाः" "उत्तरोत्तरयुक्तौ च वक्ता वाचस्पतिर्यथा ।" "भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ।" "बुद्धिमान् मधुराभाषी पूर्वभाषी प्रियंवदः ।" "ईरयन्तं भारतीं भास्वतामर्चनीयां शङ्करीं सृञ्जयानाम् । शुश्रूषद्भिर्ग्रहणीयामनिन्द्यां परासूनामग्रहणीयरूपाम् ॥" "ओघमेघस्वनः काले प्रगृह्य विपुलं भुजम् । अनर्मकृतमत्रस्तमनिरस्तमसंकुलम् ॥ राजीवनेत्रो राजानं हेतुमद्वाक्यमब्रवीत्" । इत्यादि ॥ २६८ ॥

( २६९. महेन्द्रः ) एवं सर्वतोमुखं प्रसृतत्वात् पूज्यपरमैश्वर्यो 'महेन्द्रः' ॥ "इदि परमैश्वर्ये" "ऋज्रेन्द्राग्र" इत्यादिना रन्प्रत्ययान्तो निपातितः ॥ २६९ ॥

( २७०. वसुदः ) एवं सत्यप्यनभिभवनीये महेन्द्रत्वेन महत्त्वे लघुभ्यो धनायद्भ्यो धनं ददातीति "वसुदः" । यथा "देवेन्द्रस्त्रिभुवनमर्थमेकपिङ्गः" इत्यादि ॥ २७० ॥

( २७१. वसुः ) 'वासुदेवः सर्वम्' इति प्रकारेण गरीयसां स्वयमेव धनमिति 'वसुः' ॥ २७१ ॥

[ २७२. नैकरूपः ] अथ यथोक्तमहिमोचितवैश्वरूप्यम् । तत्तत्सर्वप्रतीतियोग्यरूपो "नैकरूपः" । 'नभ्राण्णपात्' इत्यत्र नभ्राड्ग्रहणस्य प्रदर्शनार्थत्वान्नञ्समासस्य महाविभाषया विकल्पितत्वाद्वा नलोपाभावः । एवं नैकमाय इत्यादयः । 'विश्वरूपाय' इति मन्त्रवर्णात्, "पश्यामि त्वा सर्वतोऽनन्तरूपम्" इति ॥ २७२ ॥

( २७३. बृहद्रूपः ) एष्वेकैकमेव दिव्योमावकाशं व्याप्नुवद् बृहद्रूपमस्येति 'बृहद्रूपः' । यथा 'द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्वाः' ॥ इति ॥ २७३ ॥

( २७४. शिपिविष्टः ) शिपयः—रश्मयः, तान् संप्रविश्य व्याप्तवानिति "शिपिविष्टः" । यास्कः "शिपयो रश्मय उच्यन्ते तैराविष्टः" इति । एतत्प्रायमार्षम् "शिपिविष्टेति यच्चास्य पतिं रोमं च यद्भवेत् । तेनापि विष्टं यत्किञ्चित्" उद्योगे "शिपिविष्टं हि तत् स्मृतम् । रोमकूपेषु च तथा सूर्यस्येव मरीचयः" इति "तेजोभिरापूर्य जगत्समग्रं भासस्तवोग्राः प्रतपन्ति विष्णो" इति ॥ २७४ ॥

( २७५. प्रकाशनः ) इदमेव दिव्यं रूपं दिदृक्षुभ्योऽर्जुनादिभ्योऽसौ प्रकाशयतीति "प्रकाशनः" । यथा "दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ।" "सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम" इति ॥ २७५ ॥

स्थाने उदितमेव



( २७६. ओजस्तेजोद्युतिधरः ] ओजः—बलम्, तेजः - पराभिभवनसामर्थ्यं कीर्तिर्वा, द्युतिः—औज्ज्वल्यम्, तानि धरतीति "ओजस्तेजोद्युतिधरः" स एव । एकं नाम । "यथा प्रदीप्तं ज्वलनं पतङ्गा विशन्ति नाशाय समृद्धवेगाः" "स्थाने हृषीकेश तव प्रकीर्त्या" "दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता" इत्यादि ।२७६।

[ २७७. प्रकाशात्मा ] मूर्खैरपि संप्रतिपन्नपरप्रभावः "प्रकाशात्मा" । यथा धृतराष्ट्रः " त्वमेव पुण्डरीकाक्ष सर्वस्य जगतः प्रभुः । तस्मान्मे यादवश्रेष्ठ प्रसादं कर्तुमर्हसि" । इति ॥ २७७ ॥

[ २७८. प्रतापनः ] "भासस्तवोग्राः प्रतपन्ति" इति "प्रतापनः" ॥ २७८ ॥

[ २७९. ऋद्धः ] एवं कृत्स्नमुद्वहत्पार्वणार्णव इव "ऋद्धः" । यथोद्योगे "ततः स पुरुषव्याघ्रः संजगाद पुनः स्वयम् । तां दिव्यामद्भुतां चित्रामृद्धिमत्तामरिन्दम" । इति ॥ २७९ ॥

(२८०. स्पष्टाक्षरः) अनयद्धर्या प्रतिपाद्यया स्पष्टीकृतवेदाक्षर इति "स्पष्टाक्षरः" ॥ २८० ॥

[ २८१. मन्त्रः ] तन्मन्तारं त्रायत इति "मन्त्रः" इति नैरुक्ताः। ब्राह्मे दुष्टविद्रावणस्तोत्रे 'प्राणप्रयाणे कः स्मर्तुं शक्तस्त्वान्मधुसूदन' इति पृच्छन्तं नारदं प्रति भगवान् 'तृष्णातोयसमाकीर्णाद्घोरात् संसारसागरात् । अपारान् पारमाप्नोति यो मां स्मरति नित्य-

शः ॥" "स्थिते मनसि सुस्वस्थे शरीरे सति यो नरः । धातुसाम्ये स्थिते स्मर्ता विश्वरूपं च मामजम् । ततस्तं म्रियमाणं तु काष्ठपाषाणसंनिभम् । अहं स्मरामि मद्भक्तं नयामि परमां गतिम्" ॥ इति ॥ २८१ ॥

( २८२ चन्द्रांशुः ) तेषां मन्तॄणां क्रमहराह्लादनतेजस्त्वात् "चन्द्रांशुः" ॥ "चदि आह्लादने" ।"स्फायितञ्चि" इत्यादिना रन्, चन्द्रः । यथा "ते तं सोममिवोद्यन्तम्" इत्यादि ॥ २८२ ॥

( २८३. भास्करद्युतिः ) परेषां परिभावुकप्रभावत्वाद् "भास्करद्युतिः" । यथा "रक्षांसि भीतानि दिशो द्रवन्ति" इति 'शरजालांशुमान् शूरः कपे रामदिवाकरः । शत्रुरक्षोमयं तोयमुपशोषं नयिष्यति ॥" इति च । उभयत्र "एवमेषोऽसुराणां च सुराणां चैव सर्वशः । भयाभयकरः कृष्णस्सर्वलोकेश्वरः प्रभुः ॥" इति ॥ २८३ ॥

( २८४. अमृतांशूद्भवः ) सर्वतापहराप्यायनमृतसंजीवनामृतमयांशुश्चन्द्रोऽपि तन्मनःशैत्यादिगुणोपस्नेहात् तथोद्भवतीति "अमृतांशूद्भवः" । 'चन्द्रमा मनसो जातः" इति ॥ २८४ ॥

( २८५. भानुः ) अतिभास्वरेण सहस्रांशुनाऽप्युपजीव्यतेजा भातीति "भानुः" । 'यस्यादित्यो भामुपयुज्य भाति" इति । २८५ ॥

( २८६. शशबिन्दुः ) एवं च "शशबिन्दुः" । "शश प्लुतगतौ" । शशानां कुटिलगतीनां "बिन्दुः" अपलपिता । "बिदि अवयवे": बिन्दुरिच्छुरित्युप्रत्ययान्तो निपातितः ॥ २८६ ॥

( २८७. सुरेश्वरः ) तथा ऋजुगतीनां निर्वाहकः 'सुरेश्वरः" । "सर्वं जिह्मं मृत्युपदमार्जवं ब्रह्मणः पदम्" इतिवत् ॥२८७॥

( २८८. औषधम् ) भवतीव्रविपापहप्रभावत्वाद् "औषधम्" । यथा "देवा देवर्षयश्चैव यं विदुर्दुःखभेषजम्" । "एकान्तामूल्यबलेन लभ्यं भवौषधं त्वं भगवन् किलैकः" इत्यादि ॥२८८॥

[ २८९. जगतस्सेतुः ] एवं सदसद्वर्गसंकरविरोधित्वेन "जगतस्सेतुः" । "षिञ् बन्धने; "सितनिगमि" इत्यादिना तुन् । यथा "एष सेतुर्विधरण एषां लोकानामसंभेदाय" इति । अतः खलु कर्मस्वकृताभ्यागमकृतविप्रणाशयोरप्रसक्तिः । 'यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् । तथा पूर्वकृतं कर्म कर्तारमनुविन्दति" ॥ 'शुभकृच्छुभमाप्नोति पापकृत्पापमश्नुते" इति ॥ २८९ ॥

( २९०. सत्यधर्मपराक्रमः ) एवं त्रिधा धर्माः कल्याणगुणाः पराक्रमाश्चेष्टितानि च सत्या अवितथा यस्य सः "सत्यधर्मपराक्रमः" । तथाहि गुणचेष्टितानि प्रक्रम्य "सर्वमेतदृतं मन्ये यन्मां वदसि केशव" इत्यर्जुनः । "विष्णुः सत्यपराक्रमः" "यं वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च । गृणन्ति सत्यकर्माणं सत्यं सत्येषु सामसु" ॥ इति च ॥ २९० ॥

[ २९१. भूतभव्यभवन्नाथः ] एवंप्रायं स्वाम्यमैश्वर्यं वा न केवलमद्य, किंतु त्रिकालेष्वपीति "भूतभव्यभवन्नाथः" । यथा "भूतभव्यभवन्नाथः केशवः केशिसूदनः । प्राकारस्सर्ववृष्णीनामापत्स्वभयदोऽरिहा" ॥ इति ॥ २९१ ॥

[ २९२. पवनः ] एवं सर्वदा सर्वत्र स्वभावादेव पुनातीति "पवनः" । पवितेत्यर्थः । एतद्गन्धेन गन्धवाहस्यापि सततगतित्वम् ॥ २९२ ॥

[ २९३. पावनः ] तथा स्वसम्बन्धिनो गङ्गादीन् जगत्पुनानान् प्रयोजयतीति "पावनः" । यथाऽगस्त्यः "पावनस्सर्वलोकानां त्वमेव रघुनन्दन" । इत्यादि ॥ २९३ ॥

[ २९४. अनलः ] एवं बहुसुखमुपकृत्य च नालं नपर्याप्तमस्यानुग्रहमहिम्न इति "अनलः" । अतन्द्रो देवः । ईदृग्भक्तिशीकरानुवेधाल्लौकिकानलस्याप्यनलत्वम् ; 'हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते" इति ॥ २९४ ॥

( २९५. कामहा ) एवंप्रकारस्वगुणदर्शिनां विषयान्तरविषयस्पृहां हन्तीति "कामहा" । "न कामकलुषं चित्तं मम ते पादयोस्स्थितम्" इति तद्दर्शिनः । 'श्रोत्रियस्य चाकामहतस्य" "यदिच्छन्तो ब्रह्मचर्यं चरन्ति" इति च ॥ २९५ ॥

( २९६ कामकृत् ) अन्यदपि भोगमोक्षादिकं स्वयमेव काम्यं करोतीति "कामकृत्" ॥ २९६ ॥

"इत्युक्त्वाऽन्तर्हितस्तात स देवः परमाद्भुतः । आश्चर्यं भरतश्रेष्ठ" इति तद्विषये निर्दोषप्रत्ययसिद्धे यद्वाश्चर्यपर्यायप्रयोगश्च भूयिष्ठ उपलभ्यते ॥ ३०३ ॥

[ ३०४. महाशनः ] निखिलजगन्निगरणमस्येति महाशनः । यथा "यच्च किञ्चिन्मया लोके दृष्टं स्थावरजङ्गमम् । तदपश्यमहं सर्वं तस्य कुक्षौ महात्मनः" । इति ॥ ३०४ ॥

( ३०५. अदृश्यः ) "अदृश्यः" । "ऋदुपधाच्चाक्लृपिचृतेः" इति क्यप् । अतर्क्यवृत्तान्तः । यथा "कथं न्वयं शिशुः शेते लोके नाशमुपागते । तपसा चिन्तयंश्चापि तं शिशुं नोपलक्षये" इति ।

( ३०६. व्यक्तरूपः ) अथच, अभिगच्छतो मार्कण्डेयादेः "व्यक्तरूपः" सुमहद्दिव्यविग्रहः । यथा 'अतसीपुष्पसंकाशः श्रीवत्सकृतलक्षणः । साक्षाल्लक्ष्म्या इवावासः स सदा प्रतिभाति मे ॥ 'तस्य ताम्रतलौ तात चरणौ सुप्रतिष्ठितौ । सुजातमृदुरक्ताभिरङ्गुलीभिरलङ्कृतौ । प्रयतेन मया मूर्ध्ना गृहीत्वा ह्यभिवन्दितौ" । इति ॥

( ३०७. सहस्रजित् ) सहस्रयुगसंख्यं कल्पान्तं शयानो जयतीति "सहस्रजित्" । "यावद्युगानां विप्रर्षे सहस्रं परिवर्तते । तावत् स्वपिमि" इत्यादि ॥ ३०७ ॥

[ ३०८. अनन्तजित् ] परिमितशिशुरूपस्याप्यस्य कश्चित् कदाचित् कथंचिदपि महिमावधिविप्रकर्षो नास्तीति "अन-

न्नजित्" । "अन्तः शरीरे तस्याहं वर्षाणामधिकं शतम् । न हि पश्यामि तस्याहमन्तं देवस्य कर्हिचित् ॥ आसादयामि नैवान्त तस्य राजन् महात्मनः" ॥ इति ॥ ३०८ ॥

[ ३०९. इष्टः ] एवमुदरेण धृतैर्मुख्यैरप्यविशेषेण जनश्रिश्रीय वाञ्छित इति "इष्टः" ॥ ३०९ ॥

( ३१०. अविशिष्टः ) "अविशिष्टः" ॥ ३१० ॥

[ ३११. शिष्टेष्टः ] तथा पण्डिताग्रण्यां मार्कण्डेयादीनां परमपुरुषार्थत्वेनेष्टः "शिष्टेष्टः" । तत्रैव च " सत्त्वस्था निरहंकारा नित्यमध्यात्मकोविदाः । मामेव सततं विप्राश्चिन्तयन्त उपासते" इति ॥ ३११ ॥

( ३१२. शिखण्डी ) "आसीनं तं नरव्याघ्रं पश्याम्यमिततेजसम्" इत्यपरिमिताप्रधृष्यमैरनर्घं परं तेजः शिखण्डमस्यातिशयितमिति 'शिखण्डी' । "अतिशायने" इतीनिः ॥ ३१२ ॥

( ३१३. नहुषः ) तथा स्वमायया जीवान्नह्यति बध्नातीति 'नहुषः' इति नैरुक्ताः । यथा, "तस्मिंश्चान्यो मायया सन्निरुद्धः" इति ॥ ३ ३ ॥

( ३१४. वृषः ) स एवामृतोपमया स्वकान्त्या वाचा च सागरस्योद्गटनश्रान्तमाश्वासयन् सिञ्चतीति 'वृषः' । 'वृषु सेचने" । यथा, "ततो मामब्रवीद्बालस्स पद्मनिभलोचनः । श्रीवत्स-

"इत्युक्त्वाऽन्तर्हितस्तात स देवः परमाद्भुतः । आश्चर्यं भरतश्रेष्ठ" इति तद्विषये निर्दोषप्रत्यक्षसिद्धे चह्वाश्चर्यपर्यायप्रयोगश्च भूयिष्ठ उपलभ्यते ॥ ३०३ ॥

[ ३०४. महाशनः ] निखिलजगन्निगरणमस्येति महाशनः । यथा "यच्च किञ्चिन्मया लोके दृष्टं स्थावरजङ्गमम् । तदपश्यमहं सर्वं तस्य कुक्षौ महात्मनः" । इति ॥ ३०४ ॥

( ३०५. अदृश्यः ) "अदृश्यः" । "ऋदुपधाच्चाक्लृपिचृतेः" इति क्यप् । अतर्क्यवृत्तान्तः । यथा "कथं त्वयं शिशुः शेते लोके नाशमुपागते । तपसा चिन्तयंश्चापि तं शिशुं नोपलक्षये" इति।

( ३०६. व्यक्तरूपः ) अथच, अभिगच्छतो मार्कण्डेयादेः "व्यक्तरूपः" सुमहद्दिव्यविग्रहः । यथा 'अतसीपुष्पसंकाशः श्रीवत्सकृतलक्षणः । साक्षाल्लक्ष्म्या इवावासः स सदा प्रतिभाति मे ।' 'तस्य ताम्रतलौ तात चरणौ सुप्रतिष्ठितौ । सुजातमृदुरक्ताभिरङ्गुलीभिरलङ्कृतौ । प्रयतेन मया मूर्ध्ना गृहीत्वा ह्यभिवन्दितौ" । इति ॥

( ३०७. सहस्रजित् ) सहस्रयुगसंख्यं कल्पान्तं शयानो जयतीति "सहस्रजित्" । "यावद्युगानां विप्रर्षे सहस्रं परिवर्तते । तावत् स्वपिमि" इत्यादि ॥ ३०७ ॥

[ ३०८. अनन्तजित् ] परिमितशिशुरूपस्याप्यस्य कश्चित् कदाचित् कथंचिदपि महिमावधिविप्रकर्षो नास्तीति "अन-

न्नजित्" । "अन्तः शरीरे तस्याहं वर्षाणामधिकं शतम् । न हि पश्यामि तस्याहमन्तं देवस्य कर्हिचित् ॥ आसादयामि नैवान्त तस्य राजन् महात्मनः" ॥ इति ॥ ३०८ ॥

[ ३०९. इष्टः ] एवमुदरेण भूतैर्मुख्यैरप्यविशेषेण जननित्रीव वाञ्छित इति "इष्टः" ॥ ३०९ ॥

( ३१०. अविशिष्टः ) "अविशिष्टः" ॥ ३१० ॥

[ ३११. शिष्टेष्टः ] तथा पण्डिताग्रण्यां मार्कण्डेयादीनां परमपुरुषार्थत्वेनेष्टः "शिष्टेष्टः" । तत्रैव च " सत्त्वस्था निरहंकारा नित्यमध्यात्मकोविदाः । मामेव सततं विप्राश्चिन्तयन्त उपासते" इति ॥ ३११ ॥

( ३१२. शिखण्डी ) "आसीनं तं नरव्याघ्रं पश्याम्यमिततेजसम्" इत्यपरिमिताप्रधृष्यैरनर्घं परं तेजः शिखण्डमस्यातिशयितमिति 'शिखण्डी' । "अतिशायने" इतीनिः ॥ ३१२ ॥

( ३१३. नहुषः ) तथा स्वमायया जीवान्नह्यति बध्नातीति 'नहुषः' इति नैरुक्ताः । यथा, "तस्मिंश्चान्यो मायया सन्निरुद्धः" इति ॥ ३ ३ ॥

( ३१४. वृषः ) स एवामृतोपमया स्वकान्त्या वाचा च सागरस्योदराटनश्रान्तमाश्वासयन् सिञ्चतीति 'वृषः' । 'वृषु सेचने" । यथा, "ततो मामब्रवीद्बालस्स पद्मनिभलोचनः । श्रीवत्स-

धारी द्युतिमान् वाक्यं श्रुतिसुखावहम् ॥ जानामि त्वां परिश्रान्तं तदा विश्वक्सेनक्षत्रियम्" इत्यादि ॥ ३१४ ॥

( ३१५. क्रोधहा ) अथ भार्गवं रामं ध्वनयति । त्रिःसप्तवारं नरपतिनिरासकरं क्रोधं काश्यपप्रार्थनामात्रेण हतवान् 'क्रोधहा'।

( ३१६. क्रोधकृत् ) पूर्वं तेभ्यः "क्रोधकृत्" च ॥३१६॥

( ३१७. कर्ता ) तथाविधक्रोधहेतोः कार्तवीर्यस्य च्छेत्ता 'कर्त्ता'। यथा, "निःक्षत्रियां यश्च चकार मेदिनीम्" इति ॥ ॥३१७॥

( ३१८. विश्वबाहुः ) एवं कपटकोद्धारेण विश्वस्मै बाहू यस्य सः 'विश्वबाहुः' ॥ ३१८ ॥

[ ३१९. महीधरः ] एवं भारावतरणेन महीं धत्त इति 'महीधरः' ॥ ३१९ ॥

[ ३२०. अच्युतः ] "च्यवनोत्पत्तियुक्तेषु ब्रह्मेन्द्रवरुणादिषु । यस्माच्च च्यवसे स्थानात्तस्मात्संकीर्त्यसेऽच्युतः" इति ब्रह्मादिसाधर्म्येणावतारेऽपि स्वैश्वर्यप्रच्युतिवैधर्म्यात् 'अच्युतः' ॥३२०॥

( ३२१. प्रथितः ) तथात्वेन प्रसिद्धः 'प्रथितः' । यथा, "तस्य नाम महद्यशः" "यशसश्चैकभाजनम्" इति ॥ ३२१ ॥

( ३२२. प्राणः ) तत्रोपजीविनां जीवितरूपत्वात् 'प्राणः' "प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्व" • 'अमृतं देवानामायुः प्रजानाम्' "प्राणस्तथानुगमात्" इति ॥३२२॥

[ ३२३. प्राणदः ] अथ कूर्ममूर्तिं सूचयति 'प्राणदः'। मरुतां मथनोचितबलप्रदः 'अनन्तबलशक्तयः' इति तन्मन्त्रवर्णात्

( ३२४. वासवानुजः ) अमृतार्थिनं वासवमनु तत्संविधानाय जात इति 'वासवानुजः'। "अनौ कर्मणि" इति डः । ३२४।

[ ३२५. अपां निधिः ] मथ्यमानमहार्णवधारणाद् 'अपां निधिः' ॥ ३२५ ॥

[ ३२६. अधिष्ठानम् ] "मन्दराद्रेरधिष्ठानं भ्रमतोऽभून्महामुने" इत्यधिष्ठानम् ॥ ३२६ ॥

( ३२७ अप्रमत्तः ) एवंविधानां कार्येषु 'अप्रमत्तः' अत्यन्तमवहितः ॥ ३२७ ॥

( ३२८. प्रतिष्ठतः ) स्वयमन्यानपेक्षया स्वे महिम्नि 'प्रतिष्ठितः'। "स भगवः क प्रतिष्ठित" इति । "स्वे महिम्नि" इति "स्वे महिम्नि स्थितं देवम्" इति च ॥ ३२८ ॥

( ३२९. स्कन्दः ) स्वयमसुरादीन् स्कन्दयति—शोषयतीति 'स्कन्दः' ॥ ३२९ ॥

( ३३०. स्कन्दधरः ) तादृशं सुरसेनान्यमपि धरत इति 'स्कन्दधरः'। सोऽपि हि तस्य विभूतिः, "सेनानीनामहं स्कन्द इति ॥ ३३० ॥

( ३३१. धुर्यः ) "भुवनभृत" इति तन्मन्त्रवर्णात् 'धुर्यः' । "धुरो यड्ढका" विति यत् ॥ ३३१ ॥

( ३३२. वरदः ) अन्येभ्योऽपि लोककार्यधुर्येभ्यो देवेभ्यस्तांस्तान्वरान् ददातीति 'वरदः' ॥ ३३२ ॥

( ३३३. वायुवाहनः ) तद्यथा 'वायुवाहनः' जगत्प्राणं वायुं वाहयतीति ॥ ३३३ ॥

( ३३४. वासुदेवः ) अथ द्विपट्काध्यात्मविषयः 'वासुदेवः' वासुश्चासौ देवश्चेति । विश्वं स्वस्मिन्सर्वात्मीव वासयन्, पक्षाभ्यामिवाच्छादयंश्च तस्मिन्वसतीति वासुः । एवं क्रीडति, विजिगीषते, अथ च द्योतते, स्तूयते, गच्छति चेति देवः । अतो 'वासुदेवः' । निरूचुश्चर्षयः "छादयामि जगत्सर्वं भूत्वा सूर्य इवांशुभिः । सर्वभूताधिवासश्च वासुदेवस्ततः स्मृतः" "वसनात्सर्वभूतानां वासुत्वाद्देवयोनितः । वासुदेवस्ततो ज्ञेयः सर्वेषामपि पठ्यते ॥" "सर्ववासौ समस्तं च वसत्यत्रेति वै यतः । ततः स वासुदेवेति विद्वद्भिः परिपठ्यते" इति सर्वशास्त्रे । गुह्यमिति नातिव्यज्यते ॥ ३३४ ॥

( ३३५. वृहद्भानुः ) तदेव व्याचिकीर्षति । तत्र यद्योगविभूत्या द्योतमानत्वं तदाह 'बृहद्भानुः' । बृहन्तो भानवो नित्यदीप्ता अस्य सन्तीति ॥ ॥ ३३५ ॥

( ३३६. आदिदेवः ) यदपरविभूत्या क्रीडति, तदाह

'आदिदेवः' । यथा, "संप्रयोज्य वियोज्यायं कामकारकरः प्रभुः । क्रीडते भगवान्" "अप्रमेयोऽनियोज्यश्च यत्रकामगमो वशी । मोदते भगवान्विष्णुर्बालः क्रीडनकैरिव" ॥ ॥ ३३६ ॥

( ३३७. पुरन्दरः ) छादनाद्यसद्वाधनिवारणं तदाह चतुर्भिः । असुरपुराणि दारयतीति 'पुरन्दरः' । "वाचंयमपुरन्दरौ चे" ति निपातितः । असुरपिशाचाशनिग्रहाद्याधिदैविकभयहरणप्रदर्शनमेतत् ॥ ॥ ३३७ ॥ अशनाया भूख

( ३३८. अशोकः ) आध्यात्मिकानां शोकमोहाशनायादीनां निरोधी "अशोकः" ॥ ३३८ ॥

( ३३९. तारणः ) आधिभौतिकेभ्यश्च वैरिचोरव्याध्यादिभयेभ्यस्तारयतीति 'तारणः' ॥ ३३९ ॥

( ३४०. तारः ) सन्निधानाच्च सर्वसंसारभयात्तारयतीति 'तारः' । अथर्वशिरसि "गर्भजन्मजरामरणसंसारसागरमहाभयात्तारयतीति तस्मादुच्यते तारः" इति "अपहतपाप्मा विजरो विमृत्युः" इत्यादिका च श्रुतिरेतत्प्रकरणप्रवणा ॥ ३४० ॥

( ३४१. शूरः ) यद्विजिगीषुत्वम् ,तदाह 'शूरः' इति । शूरः समर्थो जैत्रः "शु गतौ" "शुसिचिमीनां दीर्घश्च" इति क्रन्प्रत्ययो दीर्घश्च ॥ ३४१ ॥

[ ३४२. शौरिः ] यद्विशेषतो भक्तान् गच्छति, तत्प्रदर्शयति 'शौरिः' शूरस्य वसुदेवस्यापत्यम् । "अत इञ्" ॥३४२॥

[ ३४३. जनेश्वरः ] एवं सर्वसंप्लावनोज्ज्वलैश्वर्यमहौघः 'जनेश्वरः' ॥ ३४३ ॥

[ ३४४. अनुकूलः ] अथ च निसर्गमहत्त्वेन चस्मयमदमानवर्जनादनुद्धलः 'अनुकूलः' कूलमनु वर्तत इति । यथा, "वीर्यवान्न च वीर्येण महता स्वेन विस्मितः" ॥

भक्तभव्यो वा 'अनुकूलः'। "हस्तावलम्बनो ह्येको भक्तिक्रीतो जनार्दनः ।" "यदि शक्नोपि गच्छ त्वमतिचञ्चलचेष्टित" इत्यादि ॥ ३४४ ॥

[ ३४५. शतावर्तः ] तथा 'शतावर्तः' शतमावर्ता अस्येति । आवर्तशब्दैनैश्वर्यविजृम्भितानि लक्ष्यन्ते । अतिवेलमप्यनुवेलीक्रियमाणमिवमैश्वर्यं संकटगतिक्षोभमुद्धरत्सरिदावर्तवद्विजृम्भते । एवं "शान्तोदितविज्ञानप्राणाये" ति परमन्त्रलिङ्गं समर्थितम् ॥ ३४५ ॥

[ ३४६. पद्मी ] एवं वासुदेवत्वं गुणतो विवृत्य रूपतोऽपि विव्रियते । लीलापद्मेन नित्ययोगाद् 'पद्मी' ॥ ३४६ ॥

[ ३४७. पद्मनिभेक्षणः ] अमलकमलास्फालननिभं श्रमापहं वीक्षणमस्येति 'पद्मनिभेक्षणः' ॥ ३४७ ॥

[ ३४८. पद्मनाभः ] नाभिश्च पद्मनिभोऽस्येति 'पद्मनाभः' ॥ ३४८ ॥

( ३४६. अरविन्दाक्षः ) अरविन्दसुन्दरे अक्षिणी अस्येति 'अरविन्दाक्षः' । ॥ ३४६ ॥

( ३५०. पद्मगर्भः ) स्वसदृशेन सुरभिकोमलेन पद्मेनोपासकमानससरसिजेन वा गीर्यते स्वान्तरवस्थाप्यत इति 'पद्मगर्भः' । "अर्तिगृभ्यां भन्" । यथा, "दहरं विपाप्मं परवेश्मभूतं यत्पुण्डरीकम्" "दहरं पुण्डरीकं वेश्म" "सरसिजासनसन्निविष्टः" इत्यादि ॥ ॥ ३५० ॥

( ३५१. शरीरभृत् ) ईदृशेन शुभाश्रयेण स्वशरीरभूतमुपासकं पुष्णातीति "शरीरभृत्" । उपास्यगुणैर्हि तेषां पोषः । "वसति हृदि सनातने च तस्मिन् भवति पुमान् जगतोऽस्य सौम्यरूपः" "ब्रह्मविद इव सोम्य ते मुखं भाति" इति च । उपासको हि तस्यात्मवच्छरीरवच्च "रक्षते भगवान् विष्णुर्भक्तानात्मशरीरवत्" इति ॥ ३५१ ॥

( ३५२. महर्द्धिः ) अथ विभूतितोऽपि स एव विक्रियते । तद्योगक्षेमक्षमनिस्सीमविभूतिः– "महर्द्धिः" ॥ ३५२ ॥

[ ३५३. ऋद्धः ] तत्समृद्ध्या स्वयमपि समृद्धः– 'ऋद्धः' । यथा "अभिषिच्य च लङ्कायाम्" इति ॥ ३५३ ॥

( ३५४. वृद्धात्मा ) इमं महान्तं महिमानं चुलकयन्निव प्रवृद्ध आत्मा–स्वरूपमस्येति 'वृद्धात्मा' ॥ ३५३ ॥

[ ३५५. महाक्षः ] 'महाक्षः' महान् पूज्योऽक्षो यस्य सः । वहनेन रथावयवसाम्यादक्षः त्रयीमयस्तार्क्ष्यः । स हि गरुड-वाहनस्योपवाहः ॥ ॥ ३५५ ॥

( ३५६. गरुडध्वजः ) स एव ध्वजो यस्य सः 'गरुडध्वजः' तद्धि सर्वेश्वरस्यासाधारणं चिह्नम् ॥ ॥ ३५६ ॥

( ३५७. अतुलः ) एवम् 'अतुलः' अनुपमः । "न तस्य प्रतिमा अस्ती" ति ॥ ॥ ३५७ ॥ श्रीदिंसापी

( ३५८. शरभः ) स्वमर्यादातिवर्तिनः शृणातीति 'शरभः' । "कृशृशलिकलिगर्दिभ्योऽभच्" इत्यभच् ॥ ॥ ३५८ ॥

[ ३५९. भीमः ) अतस्ते तस्माद्बिभ्यतीति 'भीमः' । "भियः षुग्वा" इति मक्प्रत्ययः । "भीमादयोऽपादाने" इति । तद्भीता हि वाय्वादयो देवाः स्वमर्यादां नातिवर्तन्ते । यथा "भीषाऽस्माद्वातः पवते" इत्यादि "यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतम् । महद्भयं वज्रमुद्यतम्" "भयादेवाग्निस्तपति भयात्तपति सूर्यः । भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः" "कम्पनात्" इति ॥ ३५९ ॥

( ३६०. समयज्ञः ) अतस्तेषामग्न्यादीनामूर्ध्वज्वलनादि-समयमधिकारनियमं जानातीति 'समयज्ञः' । "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्" इति । यद्वा, भक्तेभ्यः स्वात्मदानावसरः समयः, तदभयदानव्रतं चेति ॥ ॥ ३६० ॥

( ३६१. हविर्हरिः ) 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये" इति श्रुतिसिद्धसमयं ज्ञात्वा, तेभ्यो दीयते तैरादीयते चेति 'हविः' । "हु दानादनयोः" "अर्चिशुचिहुसृपिछदिछर्दिभ्य इसिः" इतीसिः । तद्भिन्नमपहरतीति 'हरिः' "सर्वधातुभ्य इन्' इति हरतेरिन् । यथा "हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः । अनिच्छयापि संस्पृष्टो दहत्येव हि पावकः" । 'हविर्हरि' रित्येकं नाम । "इडोपहूतं गेहेषु हरे भागं क्रतुष्वहम् । वर्णश्च मे हरिः श्रेष्ठस्तस्माद्धरिरहं स्मृतः" ॥ इति ॥ ॥ ३६१ ॥

( ३६२. सर्वलक्षणलक्षण्यः ) अथ लक्ष्मीपतिमूर्तिः साक्षाल्लक्ष्मीसततालिङ्गनसौभाग्यसूचकैः सर्वैर्लक्षणैर्लक्षणे ज्ञाने साधुः 'सर्वलक्षणलक्षण्यः' । "तत्र साधुरिति" यत् । तानि लक्षणानि यथा "ध्यायेत्कमलगर्भाभं देवं लक्ष्मीपतिं ततः । कमलालयहेतीशविभूषितकरद्वयम्" तन्मनौ च "सकलसुखसौभाग्यवारिधे" इति ॥ ३६२ ॥

[ ३६३. लक्ष्मीवान् ] तथा च 'लक्ष्मीवान्' तथैव लक्ष्म्या नित्ययोगवान् । यथा "द्वयं देवीपरिणये लीलयैव समर्पयन् । प्रकाशयन्ननादित्वमात्मना प्रकृतेः सह ॥ मत्कैरनुविद्धेयं प्रकृतिः प्राकृतैरहम् । यतोऽहमाश्रितश्चास्या मूर्तिर्मय्येतदात्मिका" इति प्रकृतिःजगतां माता श्रीः ॥ ३६३ ॥

[ ३६४. समितिंजयः ] तया जगत्पिता पितृवन्निर्वृति-

करोऽयं जीवानां स्वदास्यविवादक्लेशं जयतीति 'समितिंजयः'। "संज्ञायां भृतॄवृजि" इत्यादिना खच्। "अखिलदुःखजयः" इति मन्त्रवर्णात् ॥ ३६४ ॥

[ ३६५ विक्षरः ] यथोक्तभक्तप्रणयाक्षरणात् 'विक्षरः'।

( ३६६. रोहितः ) कमलगर्भाभत्वात 'रोहितः' ॥ ३६६ ।

( ३६७. मार्गः ) उपासकैर्मार्ग्यत इति 'मार्गः'। "वाञ्छित-सिद्धिप्रदः" इति मन्त्रवर्णात् ॥ ॥ ३६७ ॥

( ३६८. हेतुः ) तद्धेतुः 'हेतुः'। "हि गतौ" "कमिमनि" इत्यादिना तुः। ॥ ३६८ ॥

( ३६९. दामोदरः ) उदरे दामान्यस्येति 'दामोदरः'। "दामानि लोकनामानि भान्ति यस्योदरान्तरे। तेन दामोदरो देवः" इति। "देवानां सुखशंसित्वाद्दामाद्दामोदरं विदुः" इति वा। "ततः स दामोदरतां प्रययौ दामबन्धनात्" इति वा। एवं लक्ष्म्या अपि स्पृहणीयचातुर्योऽपि सन् यशोदादामनि गलितजलः संश्रितवात्सल्याद्बभूवेत्यर्थः ॥ ॥ ३६९ ॥

[ ३७०. सहः ] एवं तद्बन्धनतर्जनभर्त्सनादिकं सहत इति 'सहः' ॥ ३७० ॥

[ ३७१. महीधरः ] स एव भूभारधरणेन 'महीधरः' ॥

( ३७२. महाभागः ) वल्लवीनीलाषोडशसहस्रदिव्यकन्यका-रुक्मिणीसत्यभामाजाम्बवतीप्रभृतीनां स्वयंवरसौभाग्यवत्त्वाद् 'महाभागः' ॥ ३७२ ॥

( ३७३. वेगवान् ) मनुष्यधर्मलीले बाल्येऽपि दुर्वारप-रमैश्वर्यप्रसरत्वाद् 'वेगवान्' । अतिशायने मतुप् ॥ ॥ ३७३ ॥

( ३७४. अमिताशनः ) कथम् ? 'अमिताशनः' अपरि-मितं गोपैरिन्द्राय परिकल्पितमशनमस्येति । तस्मिन्विस्मिता हि गोपास्तमतिशशङ्किरे । यथा "देवो वा दानवो वा त्वम्" इत्यादि ॥

( ३७५. उद्भवः ) "दामोदरं बन्धहरम्" इति प्रकारेण स्वबन्धानुसंधायिनां भवबन्धनिर्धूननेनोद्गतो भवोऽस्मादिति 'उद्भवः' ।

( ३७६. क्षोभणः ) अन्यान् बन्धार्हान् बन्धनीं च प्रकृ-तिं क्षोभयतीति 'क्षोभणः' ॥ ॥ ३७६ ॥

( ३७७. देवः ) मायापाशेन व्याघ्रवराहादिवज्जीवान् बद्ध्वा दीव्यति क्रीडतीति 'देवः' ॥ ३७७ ॥

( ३७८. श्रीगर्भः ) एवंप्रायभोगक्रीडासाहित्येन वर्धनीया-ऽस्य श्रीरिति 'श्रीगर्भः' "विष्णोरेषाऽनपायिनी" ति ॥ ॥ ३७८ ॥

( ३७९. परमेश्वरः ) एवं लक्ष्मीस्वयंग्रहणसप्रयोजनपर-मैश्वर्यः 'परमेश्वरः' । यथा "अतीव रामः शुशुभेऽभिकामया विभुः श्रिया विष्णुरिवामरेश्वरः" इति ॥ ३७९ ॥

[ ३८०. करणम् ] स्वप्राप्तेः साधकतमत्वात् 'करणम्'। ज्ञानकरणानां श्रवणनयनादीनां क्रीडोपकरणानां करचरणादीनां चैतच्छक्तिशीकरतः करणत्वम् । यथा "चक्षुश्च द्रष्टव्यं च नारायणः श्रोत्रं च श्रोतव्यं च नारायणः" इत्यादि ॥ ३८० ॥

( ३८१. कारणम् ) तैस्तैस्तद्वतस्तत्तत्कारयतीति 'कारणम्' दैवतम् ॥ ३८१ ॥

( ३८२. कर्ता ) तत्र स्वतन्त्रः 'कर्ता'। अधिकारी फली जीवोऽपि हि स्वयं स्वस्य यथा सुखदुःखाभिमानी, तथा तदतिशयेन वा तदवस्थाभिमानी हि भगवान्। यथा "व्यसनेषु मनुष्याणां भृशं भवति दुःखितः। उत्सवेषु च सर्वेषु पितेव परितुष्यति" "बहु स्यां प्रजायेये" ति च । पृथगभिमानित्वे हि न बहु स्यामिति स्यात्।

( ३८३. विकर्ता ) अत एव तत्फलभोगेन हर्षशोकादिभिर्विकुर्वाणः 'विकर्ता'। स्वार्थहर्षशोकाद्यभावेऽपि परार्थतत्प्रसक्तिरदोषः । अन्यथा परदुःखदुःखित्वादयो गुणाः कथमस्य स्युः?॥३८३॥

( ३८४. गहनः ) एवं सर्वेषां ज्ञानायतनभोगतदुपकरणस्वरूपेषु तदभिन्नतन्त्वाभिमानात्मके महागुणे 'गहनः' अतिभूमिः। "इहैव सन्तं न विजानन्ति देवाः"। तत्रान्तर्यामिब्राह्मणम् "यः पृथिव्यां तिष्ठन्" इत्यादि सर्वम् । सुबालोपनिषदि "चक्षुश्च द्रष्टव्यं च नारायणः" इत्यादि । "अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् । विविधाश्च पृथक्चेष्टा दैवं चैवात्र पञ्चमम् ॥" इति ॥३८४॥

(३८५. गुहः) एवं गूहति–रक्षतीति 'गुहः' ॥ ३८५ ॥

(३८६. व्यवसायः) अथ ध्रुवमूर्तिः । अतिशयेन सीयते वध्यतेऽस्मिन् ज्योतिश्चक्रमिति 'व्यवसायः' । अधिकरणे घञ्, नक्षत्राधारव्योमशरीरत्वात् । अतो हि "गगनमूर्तये" इति तन्मन्त्रवर्णः । "भवचक्रभृतं देवम्" इति तद्ध्यानम् ॥ ॥ ३८६ ॥

(३८७. व्यवस्थानः) तन्मूलः कालः कलामुहूर्ताद्यात्मा तत्रैव व्यवतिष्ठत इति 'व्यवस्थानः' ॥ ॥ ३८७ ॥

(३८८. संस्थानः) सर्वमेतस्मिन् संतिष्ठते समाप्यत इति 'संस्थानः' ॥ ३८८ ॥

(३८९. स्थानदः) स एव "परमपदप्राप्तिहेतवे" इति मन्त्रवर्णात् 'स्थानदः' ॥ ३८९ ॥

(३९०. ध्रुवः) स खलु तुङ्गपदप्रदानेनार्वाचीनं ध्रुवमपि ध्रुवीचकार । अतो 'ध्रुवः' । अस्य सर्वव्यापकत्वं तत्त्वम् ॥३९०॥

(३९१. परर्द्धिः) अथ मृतसंजीवनं रामचरितम् । सर्वैश्वर्यादपि पराऽस्य कल्याणगुणसमृद्धिरिति 'परर्द्धिः' । परावस्थस्यापि हि रामस्यावरसोमादिदेवगुणैकदेशनिदर्शनं क्रियते । यथा "विष्णुना सदृशो वीर्ये सोमवत्प्रियदर्शनः" इत्यादौ । परत्वं चास्यैव । एतदुक्तम् "अव्यक्तमक्षरं ब्रह्मनिर्मितम् । देवानां हृदयं सौम्यं गुह्यं रामः परन्तपः" "बहवो नृप कल्याणगुणाः पुत्रस्य

सन्ति ते" इत्यादि । "भगवते" इति स्वमन्त्रवर्णाच्च ॥ ॥ ३६१ ॥

( ३६२. परमस्पष्टः ) किञ्च 'परमस्पष्टः' स्पष्टप्रत्यक्षदृष्टस्वपारम्यः । यथा "व्यक्तमेष महायोगी परमात्मा सनातनः" "सूर्यस्यापि भवेत्सूर्य" इत्यादि ॥ ३६२ ॥

( ३६३. तुष्टः ) अधिकृताधिकारात्परत्वादप्यतिशयेन समस्तमनुष्याद्यधिकारयोर्दाशरथित्वजगत्पालनयोर्लाभात्प्रीतः 'तुष्टः' । यथा "पितरं रोचयामास तदा दशरथं नृपम्" "कृत्योचितमतिः त्वावं धर्मं स्वं बहु मन्यते" "आत्मानं मानुषं मन्ये रामं दशरथात्मजम्" इति ॥ ॥ ३६३ ॥

( ३६४. पुष्टः ) एवं महागुणैः परिपूर्णः 'पुष्टः' । 'तमेवं गुणसंपन्नम्" इति ॥ ॥ ३६४ ॥

( ३६५. शुभेक्षणः ) एवंविधैश्वर्यशीलातिशयपिशुनशीतलविशालोदारदीर्घराजीवलोचनः 'शुभेक्षणः' । यथा "सुभ्रूरायतताम्राक्षः साक्षाद्विष्णुरिव स्वयम्" इति । स्वकर्मकं स्वकर्तृकं च दर्शनमतिशुभमस्येति वा 'शुभेक्षणः' । यथा "यश्च रामं न पश्येत्तु यं च रामो न पश्यति । निन्दितः स वसेल्लोके स्वात्माऽप्येनं विगर्हते ॥" इति ॥ ३६५ ॥

( ३६६. रामः ) 'रम्यतेऽस्मिन्सदा सर्वैर्गुणरूपवशीकृतै'रिति 'रामः' । यथा "रामो रमयतां श्रेष्ठः" "गुणाभिरामं रामं च" "श्यामो युवा लोहिताक्षो मातङ्गानामिवर्षभः" "तथा सर्व-

प्रताकान्तैः प्रीतिसंजननैः पितुः। गुणैर्विरुरुचे रामो दीप्तः सूर्य इवांशुभिः" इति। "शरदिन्दीवरत्विषे- अभिरामशरीराये" ति स्वभन्वालिङ्गाच ॥ ॥ ३९६ ॥

(३९७. विरामः) विरम्यतेऽस्मिन् वरप्रदैर्ब्रह्मादिभिर्वरैश्चा-वध्यत्वादिभिर्लब्धवरैश्च रावणादिभिरिति 'विरामः'। यथा "ब्रह्मा स्वयंभूश्चतुराननो वा" इत्यादि ॥ ॥ ३९७ ॥

(३९८. विरतः) निसर्गनैरपेक्ष्येण कृपणाद्राज्यादेः 'विरतः'। यथा "न चास्य महतीं लक्ष्मीं राज्यनाशोऽपकर्षति" "लोककान्तस्य कान्तत्वां शीतरश्मेरिव क्षयः।" "स पितुर्वचनं श्रीमानभिषेकात्परं प्रियम्" "धर्मोपदेशात्त्यजतश्च राज्यं मां चाप्यरण्यं नयतः पदातिम्"इत्यादि। (मार्गः) भरद्वाजादिमुनिभिर्मार्ग्यत इति 'मार्गः'।

'विरजोमार्ग इति पाठे विरजाः- अपांसुलो निर्दिष्तदर्शितो मार्ग इति। यथा "या गतिर्यज्ञशीलानामाहिताग्नेश्च या गतिः" "आवहत्परमां गतिम्" इति ॥ ३९८ ॥

(३९९. नेयः) सुहृदां नियोगार्हत्वात् 'नेयः'। यथा "आज्ञाप्योऽहं तपस्विनाम्" "आवासं त्वहमिच्छामि प्रदिष्टमिह कानने" "सुहृदां ह्यर्थकृच्छ्रेषु युक्तं बुद्धिमता सता। समर्थेनापि सन्देष्टुं शाश्वतीं भूतिमिच्छता"। सभापर्वणि च स्वयम् "यजस्वाभीप्सितं यज्ञं मयि श्रेयस्यवस्थिते। नियुङ्क्ष्व चापि मां कृत्ये सर्वं कर्तास्मि ते वचः" उद्योगे— "अयमस्मि महाबाहो ब्रूहि यत्ते विवक्षितम्।

करिष्यामीह तत्सर्वं यत्त्वं वक्ष्यसि भारत" । "वायुसूनोः सुहृत्त्वेन भक्त्या परमया च सः । शत्रूणामप्रकम्प्योऽपि लघुत्वमगमत्कपेः" इति वा ॥ ३९९ ॥

[४००. नयः] ते च तथाऽस्मिन्नीयन्त इति "नयः" । ते ह्याहुः "रक्षितव्यास्त्वया शश्वद्गर्भभूतास्तपोधना." "पाण्डवानां भवान्नाथो भवन्तं चाश्रिता वयम्" इति ॥ ४०० ॥

इति श्रीमद्विष्णुसहस्रनामविवरणे भगवद्गुणदर्पणे
चतुर्थं शतकं समाप्तम् ॥

---

## अथ पञ्चमशतकप्रारम्भः ।

[४०१. अनयः] स एव, प्रसुहृद्भिर्न नयोऽस्यासीदिति "अनयः" । यथा रावणेन "हिमवान् मन्दरो मेरुस्त्रैलोक्यं वा सहामरैः । शक्यं भुजाभ्यामुद्धर्तुं न संख्ये भरतानुजः" । यद्वा, "अयः शुभावहो विधिः" सोऽस्मादन्यो जगतां नास्तीति "अनयः" । यथा "एते वयं सर्वसमृद्धकामा येषामयं नो भविता प्रशास्ता" इति ।

[४०२. वीरः] रक्षसामतिभयचलनहेतुत्वाद् "वीरः" ।

"अज गतिक्षेपणयोः" "स्फायितञ्चिवञ्चि" इत्यादिना रक् "अजेर्व्य-घञपोः" इति वीभावः । यथा "ब्रह्मदण्डप्रकाशानां विद्युज्ज्वलित-वर्चसाम् । स्मरन् राघवबाणानां विव्यथे राक्षसेश्वरः" "मात-ङ्ग इव सिंहेन गरुडेनेव पन्नगः । अभिभूतोऽभवद्राजा राघवेण महात्मना" । यथा च मारीचः 'वृक्षे वृक्षे च पश्यामि चीरकृष्णा-जिनाम्बरम् । गृहीतधनुषं रामं पाशहस्तमिवान्तकम्" इत्यादि ।४०२।

[ ४०३.शक्तिमतां श्रेष्ठः ] शक्तिमतां सुरादीनामति-शयेन प्रशस्य इति "शक्तिमतां श्रेष्ठः" । यथाऽऽह परशुपरिकर्मा रामः 'अक्षय्यं मधुहन्तारं जानामि त्वां सुरेश्वरम्" इति, ब्रह्मा च "कथं देवगणश्रेष्ठ नात्मानमवबुध्यसे" "देवाश्च दैत्याश्च निशा-चरेन्द्रगन्धर्वविद्याधरनागयक्षाः । रामस्य लोकत्रयनायकस्य स्था-तुं न शक्तास्समरेषु सर्वे" "सर्वान् लोकान् स संहृत्य संहृतान् सचराचरान् । पुनरेव तथा स्रष्टुं शक्तो रामो महाशरैः" इति

[ ४०४. धर्मः ] अभ्युदयनिःश्रेयसाभ्यां सर्वस्य साक्षा-द्धरणाद् "धर्मः" । "अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन्" इति मन्प्रत्ययः । एवं सोम इत्यादयः । तदाह तत्रैव ब्रह्मा "ब्रह्मविदां वरः । लोकानां त्वं परो धर्मः" इति, लक्ष्मणश्च "धर्मात्मा सत्यसन्धश्च रामो दाशरथिर्यदि । पौरुषे चाप्रतिद्वन्द्व-श्शरैनं जहि रावणिम्" इति । अन्ये च 'ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः । ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम्" "पुण्या द्वारवती तत्र यत्रास्ते मधुसूदनः" "साक्षाद्देवः पुराणोऽसौ

स हि धर्मः सनातनः" इत्यादि । अन्ये च "साक्षाद्रामाद्विनिर्वृत्तो धर्मश्चापि श्रिया सह" इति ॥ ४०४ ॥

[ ४०५ धर्मविदुत्तमः ] धर्मवित्सूत्तमो "धर्मविदुत्तमः" धर्मज्ञाने वसिष्ठवामदेवमार्कण्डेयादीनां शिष्योऽप्युपजीव्यः । यथा "सर्वदाऽभिगतः सद्भिः समुद्र इव सिन्धुभिः" "धर्मज्ञस्सत्यसंधश्च" "वेदर्षिभिस्सुपूजितः" "यथावत्साङ्गवेदवित्" "स्वमप्रमेयश्च दुरासदश्च जितेन्द्रियश्चोत्तमधार्मिकश्च । अक्षय्यकीर्तिश्च विचक्षणश्च क्षितिक्षमावान् क्षनजोपमाक्षः" इत्यादिना ॥४०५॥

[ ४०६ वैकुण्ठः ] सर्वेषां संश्लेषयिता 'वैकुण्ठः' । 'कुठि गतिप्रतिघाते' स चात्र संश्लेषविघातः । स च विगतो येषां ते विकुण्ठाः तेषामेव "वैकुण्ठः" । "मया संश्लेषिता भूमिरद्भिर्व्योम च वायुना । वायुश्च तेजसा सार्धं वैकुण्ठत्वं ततो मम" इति । ईदृशी हि शैली रामत्वेऽपि, यथा "राममेवानुपश्यन्तो नाभ्यहिंसन् परस्परम्" । तदसन्निधौ परस्परनिर्व्यपेक्षा हि तत्रत्याः । यथाऽऽहुः पौर्याः पतीन् "राघवं वानुगच्छध्वमश्रुतिं वापि गच्छत" इति, 'व्यसृजन् कवलान्नागा गावो वत्सान्न पाययन्' "नष्टं दृष्ट्वा नाभ्यनन्दन् विपुलं वा धनागमम् । पुत्रं प्रथमजं लब्ध्वा जननी नाभ्यनन्दत" ॥ "स्तन्यार्थिनः सुताः स्त्रीणां भर्तारो भ्रातरस्तथा । सर्वे सर्वं परित्यज्य राममेवान्वयुस्तदा" ॥ इति ॥ ४०६ ॥

( ४०७ पुरुषः ) "स यत् पूर्वोऽस्मात् सर्वस्मात् पाप्मन औषत्तस्मात्पुरुषः" इति परमपावनत्वात् "पुरुषः" । "पावनः सर्व-

लोकानां त्वमेव रघुनन्दन" इति, शबरी "तवाहं चक्षुषा सौम्य पूता सौम्येन मानद" इति। "पॄ पालनपूरणयोः" "पुरः कुषन्" इति कुषन्प्रत्ययान्तो वा "पुरुषः"। स हि रामः सर्वथा पुरुष इष्यते, "राघवं शोभयन्त्येते षड्गुणाः पुरुषोत्तमम्" "शार्ङ्गधन्वा हृषीकेशः पुरुषः पुरुषोत्तमः" ॥ ४०७ ॥

( ४०८ **प्राणः** ) सर्वप्राणनात् "प्राणः"।

[ ४०९. **प्राणदः** ] प्रसिद्धानपि प्राणान् दद्यतीति 'प्राणदः"। अतो हि तद्विरहे "अपि वृक्षाः परिम्लानाः सपुष्पाङ्कुरकोरकाः" "परिशुष्कपलाशानि वनान्युपवनानि च" इत्यादि ॥ ४०९ ॥

[ ४१०. **प्रणमः** ] 'प्रणामयती' ति श्रौत्या निरुक्त्या स्वगुणैश्चराचरनामनात् "प्रणमः"। "हृदयान्याममन्थेव जनस्य गुणवत्तया" इति ॥ ४१० ॥

[ ४११. **पृथुः** ] यशसापि विस्तीर्ण इति "पृथुः"। "प्रथ प्रख्याने" "प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्च" इति कुप्रत्ययः। "पृथुश्रीः पार्थिवात्मजः" "रामो नाम जनैः श्रुतः" "तेषामतियशा लोके रामः" "यशसश्चैकभाजनम्" इत्यादि ॥ ४११ ॥

[ ४१२. **हिरण्यगर्भः** ] अवतारासमकालवर्तिनामपि ध्यानादिनोपकारित्वमाह 'हिरण्यगर्भः', हितरमणीयस्य ध्यातृहृदयस्य शुभाश्रयत्वेन निगीर्यत्वाद् हिरण्यनिधिसाम्याद्वा। तथा तन्मन्त्रवर्णः "ध्येयः स एव विश्वात्मा" इति ॥ ४१२ ॥

[ ४१३. शत्रुघ्नः ] विपत्सु विक्षेपणात् तेषां रावणवच्छत्रुमिन्द्रियवर्गं विवेकशरैर्हन्ति शमयतीति 'शत्रुघ्नः'। "अमनुष्यकर्तृके च" इति टक्, "गमहन" इत्यादिनोपधालोपः "हो हन्तेः" इति कुत्वम्। "दशेन्द्रियाननं घोरं यो मनोरजनीचरम्। विवेकशरजालेन शमं नयति योगिनाम्" इति ॥ ४१३ ॥

[ ४१४. व्याप्तः ] तद्ध्याने मुग्धवृद्धभर्तृभृत्यशत्रुमित्रादिषु वात्सल्याविशेषाद् "व्याप्तः"। यथा "पौरान् स्वजनवन्नित्यं कुशलं परिपृच्छति। पुत्रेष्वग्निषु दारेषु प्रेष्यशिष्यगणेषु च ॥" "निखिलेनानुपूर्व्याच्च पिता पुत्रानिवौरसान्" "रिपूणामपि वत्सलः" इत्यादि ॥ ४१४ ॥

[ ४१५. वायुः ] स्वयमेव तत्र तत्र तान् गच्छतीति 'वायुः'। "कृवापाजिमि" इत्यादिनोण्। "सोऽभ्यगच्छन्महातेजाः शबरीं शत्रुसूदनः" "भरद्वाजाश्रमं गत्वा" "गुहमासाद्य धर्मात्मा" इति ॥ ४१५ ॥

( ४१६. अधोक्षजः ) एवममृतोदधिवत् सर्वैस्सदोपयुज्यमानोऽपि "अधो न क्षीयते जातु यस्मात् तस्मादधोक्षजः" इति "अधोक्षजः"। "अक्षय्यं मधुहन्तारं जानामि त्वां सुरोत्तमम्" "अक्षय्यकीर्तिश्च" इत्यादि ॥ ४१६ ॥

( ४१७. ऋतुः ) सदाऽऽपूर्वैस्सर्वोल्लासकरैरुत्तरोत्तरैर्गुणपर्यायैश्च ऋच्छतीति "ऋतुः"। "अर्तेश्च तुः" इति तुः। इतो हि

वसन्तशिशिरादीनामपि ऋतुत्वम् । यथा "घर्माभितप्ताः पर्जन्यं ह्लादयन्तमिव प्रजाः" इत्यादि ॥ ४१७ ॥

( ४१८. सुदर्शनः ) गुणप्रभावानभिज्ञानामपि दर्शनमात्रमेवास्य शोभनमिति "सुदर्शनः" । "सोमवत् प्रियदर्शनः" "सदैकप्रियदर्शनः" इति च ॥ ॥ ४१८ ॥

( ४१९. कालः ) एवंभूतैर्गुणैरात्मनि चराचरसंकलनात् "कालः" । ४१९ ॥

( ४२०. परमेष्ठी ) एवं राक्षसमृगयया जगद्वृत्तेन चात्र विहृत्य पुनः परमे स्थाने तिष्ठतीति "परमेष्ठी" । "परमे कित्" इतीनिप्रत्ययः, "अम्बाम्ब" इत्यादिना षत्वम्, "हलदन्तात्" इति सप्तम्या अलुक् । यथा "विवेश वैष्णवं तेजः सशरीरः सहानुगः" तथा सभापर्वणि "एवमेष महाबाहुरिक्ष्वाकुकुलवर्धनः । रावणं सगणं हत्वा दिवमाक्रमिता प्रभुः" ॥ इत्यादि ॥ ४२० ॥

( ४२१. परिग्रहः ) अत्र तत्र च परितो ग्रहोऽस्येति "परिग्रहः" स्वसम्बन्धिपौरजानपदतत्संबन्धिनां तद्देवनातदारामतरुदूर्वादेरपि परमपदप्रापणात् । "ये हि भगवदंशेष्वनुरागिणः" इत्यादि । अस्य सौशील्यं तत्त्वम् ॥ ४२१ ॥

( ४२२. उग्रः ) अथ शीलदुःसाधासाधुसाधकसंहाराधिकारः पातालशयनः कल्की च । युगावसाने पापानिप्रसक्तिषु संकीर्णवर्णाश्रमव्यवस्थेषु "उग्रः" प्रचण्डः । "उच समवाये" "ऋज्रे-

न्त्राम" इत्यादिना रन्प्रत्ययान्तो निपातः । "संहारमूर्तये कालवैश्वानरार्चिषे" इति मन्त्रवर्णात् । श्रीपौष्करे "कल्की च विष्णुर्भगवान्नष्टधर्मावतारकृत् । उत्थां म्लेच्छगणं हत्वाऽवस्थितो यः कलौ युगे" ॥ इति ॥ ४२२ ॥

( ४२३. संवत्सरः ) पाताले संहारपरिकरैः कालप्रतीक्षोऽनन्ते संवसतीति "संवत्सरः" । संपूर्वाद्वसतेः "संपूर्वाच्चित्" इति सरप्रत्ययः । "अनन्तशयनारूढम्" "चक्राद्यायुधवृन्देन मूर्तेन परिवारितम्" इति तद्ध्यानविधेः ॥ ४२३ ॥

( ४२४. दक्षः ) "कलिश्चरिष्यति महीं सदा दस्युवधे रतः । आक्रोशमानान् सुभृशं दस्यून् नेष्यति संक्षयम् ॥" इति दस्युवधे दक्षते शीघ्रकारीति "दक्षः" । "दक्ष वृद्धौ शीघ्रार्थे च" "क्षिप्रकारी जनार्दनः" इति ॥ ४२४ ॥

( ४२५. विश्रामः ) पापतत्फलातिप्रसङ्गश्रान्तजन्तुविश्रामभूमिः "विश्रामः" । "धर्मस्य च विवृद्ध्यर्थं विप्राणां हितकाम्यया" इति सभापर्वणि ॥ ४२५ ॥

[ ४२६. विश्वदक्षिणः ] अपचरत्सु कथं हितकारी ? तत्राह "विश्वदक्षिणः" । विश्वस्मिन्निष्टानिष्टकारिण्यविशेषेण दक्षत इति विश्वदक्षिणः । "द्रुदक्षिभ्यामिनन्" । अपकारिष्वप्यतिक्षमत्वं हि दाक्षिण्यम्, "स इमं सकलं लोकं प्रसादमुपनेष्यति" इति । यद्वा, अश्वमेधे विश्वं विश्वंभरा दक्षिणाऽस्येति वा । आरण्यपर्वणि "तत-

श्चोरत्रयं कृत्वा द्विजेभ्यः पृथिवीमिमाम् । वाजिमेधे महायज्ञे वि-
धिवत् कल्पयिष्यति" इति ॥ ४२६ ॥

[४२७. विस्तारः] कलिप्रबलसंहारेण कृतं प्रवर्तयतोऽ-
स्माद्वेदमर्यादा प्रथत इति "विस्तारः" । "प्रथने वावशब्दे" इति
घञ् । यथा "ततोऽधर्मविनाशो वै धर्मवृद्धिश्च भारत । भविष्यति
कृते प्राप्ते क्रियावांश्च जनस्तथा" इति ॥ ४२७ ॥

(४२८. स्थावरस्थाणुः) एवं धर्मे स्थावरीकृते शमे
स्थास्यतीति "स्थावरस्थाणुः" । "स्थापयित्वा स मर्यादां स्वयम्भूवि-
हितां शुभाम्" इत्यारण्यके ॥ ४२८ ॥

(४२९. प्रमाणम्) अथ कार्तयुगानां हिताहितयोः "प्रमा-
णम्" व्यवस्थापकः । एतच्छक्तिप्रेपितं हि प्रत्यक्षाण्यपि प्रमाणं भ-
वति । यथा "तच्छीलमनुवर्तन्ते मनुष्या लोकवासिनः" इति ।
॥ ४२९ ॥

(४३०. बीजमव्ययम्) एवं कलिप्रलयावमद्यावसानेषु
पुनः पुनर्धर्मप्ररोहणाद् "बीजमव्ययम्" ॥ ४३० ॥

(४३१. अर्थः) एकभक्तैर्विशिष्टाधिकारिणस्सम्यग्ज्ञानिनः
स्वयंप्रयोजनत्वाद् "अर्थः" । अर्तेः "उपिकुषिगार्तिभ्यस्थन्" इति
थन्प्रत्ययः । यथा "ज्ञानवान् मां प्रपद्यते । वासुदेवः सर्वम्" इति

[४३२. अनर्थः] मन्दसुकृतेनार्थार्थिना निर्व्याजं नार्थ्य-

त इति "अनर्थः" । स ह्यर्थव्याजेनैनमर्थयते । यथा 'अर्थमेकपिङ्गः" इति "ये च शिष्टास्त्रयो भक्ताः फलकामा हि ते स्मृताः" इति च ॥ ४३२ ॥

( ४३३. महाकोशः ) सदा सर्वेभ्यः सर्वथा दानेऽप्यक्षयत्वान्महान्तः शङ्खपद्मादिनिधिरत्नाकररोहणगिरिवरादयः कोशा भाण्डागाराण्यस्येति 'महाकोशः' ॥ ४३३ ॥

[ ४३४. महाभोगः ] अर्थसाध्यः कामभोगोऽपि महानस्मादिति "महाभोगः" । "लभते च ततः कामान् मयैव विहितान् हि तान्" इति ॥ ४३४ ॥

[ ४३५. महाधनः ] अनिरूप्यातिक्रमणप्रदेयमनन्तं धनमस्येति "महाधनः" । सर्वं चैतत् प्रह्लादः प्राह "मरीचिमिश्रैर्दक्षेण तथैवान्यैरनन्ततः । धर्मः प्राप्तस्तथा चान्यैरर्थः कामस्तथा परैः ॥" इत्यादि ॥ ४३५ ॥

[ ४३६. अनिर्विण्णः ] एवं सृष्ट्यादेस्तत्तदिष्टदानस्य चासकृत्प्रयुक्तस्यापि संसारिषु विषयोन्मादादसंमुखीनेषु वैफल्येऽपि पुनस्तत्तदावर्जनदुराशया "अनिर्विण्णः" अनलसः । अत एव ह्यस्यानाद्यन्तो जगद्व्यापारः । "अव्युच्छिन्नास्ततस्त्वेते सृष्टिस्थित्यन्तसंयमाः" इति ॥ ४३६ ॥

[ ४३७. स्थविष्ठः ] अथानिर्वेदोदाहरणं स्वाध्यायब्राह्मणोत्तमानुवाके वैष्णवे च पुराणे प्रसिद्धम् । ताराशिशुमाराकृति-

स्ताराप्रकारेण स्थौल्यात् "स्थविष्ठः"। यथा "तारामयं भगवतः शिशुमाराकृति प्रभोः" इति ॥ ४३७ ॥

( ४३८. भूः ) ध्रुवानुबन्धेन सर्वाधारो भवतीति "भूः"। "तस्य पुच्छे ध्रुवः स्थितः" इति ॥ ४३८ ॥

( ४३९. धर्मयूपः ) धर्मतत्त्वं शिरोऽवयवतया यौतीति 'धर्मयूपः"। "यु मिश्रणे" "कुयुभ्यां च" इति पप्रत्ययो बहुलवचनाद्दीर्घश्च । "धर्मो मूर्धानमाश्रितः" "तच्छिरो धर्म." इति च ॥

( ४४०. महामखः ) धर्मशरीरतया पूज्यो यज्ञोऽस्यावयव- इति "महामखः"। यथा "यज्ञो धर्मश्च विज्ञेयः" इति ॥ ४४० ॥

( ४४१ नक्षत्रनेमिः ) ज्योतिश्चक्रं नयतीति 'नक्षत्रनेमिः' "नियो मिः" इति मिः । यथा "अलातचक्रवद्यान्ति वातचक्रे- रितानि तु । यस्माज्ज्योतींषि वहति प्रवहस्तेन स स्मृतः ॥" "एवं भ्रमन् भ्रामयति चन्द्रादित्यादिकान् ग्रहान् । भ्रमन्तमनु तं यान्ति नक्षत्राणि च चक्रवत्" इति ॥४४ ॥

( ४४२. नक्षत्री ) "शिशुमाराकृति प्रोक्तं यद्रूपं ज्योतिषां दिवि । नारायणो नयन् धाम्नां तस्याधारः स्वयं हृदि ॥" इति "नक्षत्री" ॥ ४४२ ॥ तस्य हृदि स्वयं ज्योतिषां स्वयं

( ४४३. क्षमः ) एवमखिलभुवनभारमनायासेन क्षमते वहतीति "क्षमः"। "यस्माज्ज्योतींषि वहति प्रवहस्तेन स स्मृतः" इति ॥ ४४३ ॥

आधारः नारायणः प्रोक्तः

( ४४४. क्षामः ) अवान्तरक्षये नक्षत्रान्तरैः क्षीणस्तिष्ठतीति 'क्षामः'। 'क्षै क्षये' "क्षायो मः"। यथा "तारकाः शिशुमारस्य नाशमेति चतुष्टयम्" इति "यावन्मात्रे प्रदेशे तु मैत्रेयावस्थितो ध्रुवः। क्षयमायान्ति तावत्तु भूमेराभूतसंप्लवे" इति ॥ ४४४ ॥

( ४४५. समीहनः ) अथ सृष्टौ सर्वान् सर्वदा स्वेष्वधिकारेषु समीहयतीति "समीहनः"। "त्वां भूतान्युपपर्यावर्तन्ते" इति, वद्योगे "पृथिवीं चान्तरिक्षं च दिवं च पुरुषोत्तमः। विचेष्टयति भूतानि क्रीडन्निव जनार्दनः ॥" इति ॥ ४४५ ॥

[ ४४६. यज्ञः ]"ध्रुवो यत्र प्रतिष्ठितः। एतद्विष्णुपदं दिव्यं तृतीयं व्योम्नि भास्वरम् ॥" इत्यारभ्य ध्रुवज्योतिर्मेघवृष्ट्यादिपरम्परया "इज्याफलस्य भूरेषा इज्या चात्र प्रतिष्ठिता" "ततश्चाज्याहुतिद्वारा पोषितास्ते हविर्भुजः" इति यज्ञतत्साधनतत्फलावधित्वेन प्रतिपादितः। अतो "यज्ञः"। "यजयाचयतविच्छप्रच्छरक्षो नङ्"। "यज्ञो वै विष्णुः" इति ॥ ४४६ ॥

[ ४४७. इज्यः ] कामाधिकारैरिन्द्रादिद्वारेज्यामर्हतीति 'इज्यः'। "ये यजन्ति पितॄन् देवान् ब्राह्मणान् सहुताशनान्। सर्वभूतान्तरात्मानं विष्णुमेव यजन्ति ते ॥" "येऽप्यन्यदेवताभक्ताः" "वर्णाश्रमाचारवता" इत्यादि ॥ ४४७ ॥

[ ४४८. महेज्यः ] अकामहृता महतीज्याऽस्याव्यवधानेनेति 'महेज्यः'। "ये तु सर्वाणि कर्माणि" "मयि सर्वाणि कर्माणि" इत्यादि ॥ ४४८ ॥

( ४४६. क्रतुः ) पञ्च महायज्ञा,औपासनादयः, सप्त पाकयज्ञाः,श्रौताग्निहोत्रादयः;सप्त हविर्यज्ञाश्च यज्ञपदेनोपात्ताः । अग्निष्टोमादयः सप्त सोमसंस्थाः क्रतवः, तैराराध्यः क्रियत इति 'क्रतुः'। "कृत्रः कतु" रिति कतुः ॥ ४४६ ॥

( ४५०. सत्त्रम् ) दीर्घकालबहुयजमानकमासचोदनालक्षणं सत्त्रम् । तत्र चाराध्यतया सततं सीदतीति 'सत्त्रम्'। सीदतेर्गतिकर्मणः, "गृधुवीपचिवचियमिसदित्तदिभ्यस्त्रः" ॥४५०॥

[ ४५१. सतां गतिः ] एवमेष प्रवृत्तिधर्मनिष्ठानां गतिः । अथ निवृत्तिधर्मनिरतानां "सतां गतिः;" तत्रैव "निर्धूतदोषपङ्कानां यतीनां संयतात्मनां । स्थानं तत्परमं विप्र पुण्यपापपरिक्षये" ॥ इति ॥ ४५१ ॥

( ४५२. सर्वदर्शी ) सर्वौ द्विविधावपि धर्मावध्यक्षयितुं शीलमस्येति "सर्वदर्शी" । "सुप्यजातौ णिनिस्ताच्छील्ये" इति णिनिः ॥ ४५२ ॥

( ४५३. निवृत्तात्मा ) तत्र निवृत्तिधर्माचार्यो नरनारायणादिः, परमवैराग्यख्यापनाय विषयेभ्यः प्रत्याहृतमनाः 'निवृत्तात्मा' । तद्ध्याने "अन्तर्निविष्टभावं च" । मन्त्रे च "आत्मध्यानपरायणाये" ति । "शान्तं हृत्पद्मार्पितमानस" मिति च ॥४५३॥

( ४५४. सर्वज्ञः ) तथा सर्वात्मनाऽऽत्मानं जानातीति 'सर्वज्ञः' । "युञ्जानं च स्वमात्मानं परस्मिन्नव्यये पदे" इति ॥४५४॥

( ४५५. ज्ञानमुत्तमम् ) ज्ञायतेऽस्मिन् सर्वः परो वैष्णवो धर्म इति "ज्ञानमुत्तमम्"। "पठन्तमनिशं शास्त्रं पञ्चरात्रपुरःसर" मिति ॥ ४५५ ॥

( ४५६. सुव्रतः ) "न मे पार्थास्ति कर्तव्य" मिति न्यायेन केवलपरार्थत्वात्, शोभनं व्रतमस्येति "सुव्रतः"।"एकपादेन तिष्ठन्तमाहरन्तं च मारुतम्। पञ्चमासोपवासांश्च दिशन्तमनुचिन्तयेत्" इति ॥ ४५६ ॥

( ४५७. सुमुखः ) जपाद्यचिकृतप्रसन्नमनोहरमुखत्वात् 'सुमुखः'। "ओंकारलक्षणं मन्त्रं जपन्नान्तरलक्षितम्" इति। "कृष्णाय कमलदलामलनेत्राये" ति तन्मन्त्रवर्णः ॥ ४५७ ॥

( ४५८. सूक्ष्मः ) निरुपाधिकसमाधिसाक्षात्कृतसुसूक्ष्मस्वरूपत्वात् 'सूक्ष्मः'। "सूचेः स्मन्" इति स्मन् प्रत्ययः। "सर्वे ब्रह्मपरायणाः" इति ॥ ४५८ ॥

( ४५६. सुघोषः ) औपनिषदः स्वाध्यायघोषोऽस्येति "सुघोषः"। ४५६ ॥

( ४६०. सुखदः ) एवं सदाचारसमाध्यनुष्ठापनेन तन्निष्ठेभ्यः फलं परमसुखं ददातीति "सुखदः"। ४६० ॥

( ४६१. सुहृत् ) कुत इदं परोपकारव्यसनित्वम्? यतः "सुहृत्"। अनुपकारिष्वपि किमस्य भविष्यति किं करवाणीति शुभाशंसिशोभनहृदयत्वं सुहृत्त्वम् ॥ ४६१ ॥

(४६२. मनोहरः) एवं निसर्गसौहार्देन तेषां मनो हरतीति "मनोहरः"। "हरतेरनुद्यमनेऽच्"। ॥ ४६२ ॥

[४६३. जितक्रोधः] जिताश्च तेषां क्रोधादयोऽनेनेति 'जितक्रोधः' ॥ ४६३ ॥

अथवाऽमृताहरणे "आनन्दामृतसंपूर्णवदनेनेन्दुकान्तिना। कलशाकृतिरूपेण करस्थेन विराजितम्॥" इति "सुमुखः" ॥४५७॥

असुरेषु गूढाभिप्रायत्वात् "सूक्ष्मः"। ४५८ ॥

सुरासुरादिघुष्यमाणमथनाद्भुतत्वात् "सुघोषः"। ॥ ४५९ ॥

अमृतदानादिना सुरेभ्यः सुखं ददातीति "सुखदः"। ॥४६०॥

तत्र हेतुः "सुहृत्" ॥ ४६१ ॥

असुरव्यामोहनीयरूपत्वात् "मनोहरः"। यथा "त्रैलोक्यविस्मयकरं कान्ताकृतिधरं स्मरेत्" इति। ॥ ४६२ ॥

तेन विस्मयविहस्तचेतसामसुराणां सुरेषु क्रोधो जित इति "जितक्रोधः" ॥ ४६३ ॥

(४६४. वीरबाहुः) स्फुरत्कटककेयूरमालमथनखेलाऽहमहमिकान्यतीहारविक्रान्तबाहवः सहस्रमस्येति "वीरबाहुः" ।४६४।

(४६५. विदारणः) दिव्यहेतिभी राहुमुखान् विदारितवानिति "विदारणः"। "समग्रोग्रभयविदारणाय" इतिमन्त्रवर्णात्॥ ॥ ४६५ ॥

(४६६. स्वापनः) नष्टशिष्टानपि चारुचतुरस्मितमधुर-

कटाक्षभ्रूविलासैः स्वापयति परवशयतीति "स्वापनः" । "मदविह्-लनेत्रं च देवमुद्भिन्नयौवनम्" इति ॥ ४६६ ॥

( ४६७. स्ववशः ) तेपु सुप्तेपु स्वकीयैः सह स्वैरविहा-रात् "स्ववशः" । "सर्वेश्वराय" इति तन्मन्त्रे । ॥ ४६७ ॥

( ४६८. व्यापी ) सुरासुरमन्दरवासुकिप्रभृतिपु शक्त्या-प्यायनाय व्यापनाद् "व्यापी" ॥ ४६८ ॥

( ४६९. नैकात्मा ) तदातनैर्ब्राह्मकौर्ममोहिनीमुखै रूपैः "नैकात्मा" । ४६९ ॥

( ४७०. नैककर्मकृत् ) मथनधारणवैरिविदारणसुधा-दानाद्यनेककर्मा "नैककर्मकृत्" । ४७० ॥

( ४७१. वत्सरः ) अथ धर्मात्मा पुरुषार्थव्यवस्थापनाय सर्वान्तर्वसतीति "वत्सरः" । "वसेश्च" इति सरन् प्रत्ययः । "स-र्वान्तश्चारिणे धर्मात्मने" इति हि तन्मन्त्रवर्णः ॥ ४७१ ॥

( ४७२. वत्सलः ) वत्सान् स्वोत्सुकान् कामयत इति "वत्सांसाभ्यां कामबले" इति लच् प्रत्ययः । स हि चिरं परिची-यमानेष्वपि शरणागतेपु कस्यापि हेतोः सद्यःप्रसूतेष्विव वत्सेपु सद्यु-त्क्षाणः सपयस्संस्नवस्तनवेदनाः किंकर्तव्यताकुला धेनव इव संभ्राम्य-तीति । रावणेऽपि प्रसिद्धम् "विदितः स हि धर्मज्ञश्शरणागतवत्स-लः" इति । तच्छीलभगवदुपकरणत्वाद्धि प्रसिद्धस्यापि धर्मस्य ता-च्छील्यम् ॥ ४७२ ॥

( ४७३. वत्सी ) एवं नित्यपोष्यात्मवर्गभूयस्त्वाद् 'वत्सी'। "अत इनिठनौ" इति भूमनिष्ययोगयोरिनिः ॥ ४७३ ॥

( ४७४. रत्नगर्भः ) तेषु धनायद्भ्यः प्रदेयधनाधिक्याद् "रत्नगर्भः"। यथा "कामार्थावुद्वहन्तं च शङ्खचक्रच्छलेन तु" इति

( ४७५. धनेश्वरः ) तत्तदिष्टधनदाने आशुकारित्वात् "धनेश्वरः"। आशुकर्मणि ह्यश्नोतेर्वरट् ॥ ४७५ ॥

( ४७६. धर्मगुप् ) दत्तावप्यर्थकामौ दुर्विषयान्निवर्त्य ताभ्यां हितधर्मरक्षणाद् "धर्मगुप्"। "साधुमार्गे स्थितानां च संयच्छन्तं धिया च तौ" इति ॥ ४७६ ॥

[ ४७७. धर्मकृत् ] एवं सर्वान् धार्मिकयन्नकारणादनुग्रहहेतुं धर्मं करोतीति "धर्मकृत्"। "धर्मं सामान्यममलमनादिनिधनं विभुम्। दुर्लभं यत् प्रबुद्धानां तत्प्रसादधिया विना ॥" इति।

( ४७८. धर्मी ) प्रसिद्धोऽपि धर्मोऽस्य सर्वसाधारणोपकरणमिति "धर्मी" ॥ ४७८ ॥

[ ४७९. सत् ] उक्तधर्मप्रशस्तत्वात् "सत्"। "प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते" इति। तस्य च प्राशस्त्यं साध्यस्य भगवतः सत्त्वात्। तस्य च सत्त्वं निरुपाधिकात् सद्भावात् साद्गुण्याच्च, "सद्भावान् साधुभावाच्च सदित्येतत् प्रयुज्यते" इति ॥ ४७९ ॥

**[ ४८०. सत् अक्षरम् ]** एवं नित्यनिरुपाधिकसद्भावसाद्गुण्याभ्यां "सदक्षरम्"। अस्य च विशेषणम्। क्षरं हि क्वचिद्देशे काले वा व्याहन्यते। तद्रूप्यं यथा "अपक्षयविनाशाभ्यां परिणामर्द्धिजन्मभिः। वर्जितः शक्यते वक्तुं यः सदाऽस्तीति केवलम् ॥" इति। एतदेव हि श्रूयते 'सदेव सोम्येदमग्र आसीत्" इति ॥ ४८० ॥

**[ ४८१ असत् ४८२ असत् क्षरम् ]** अप्रशस्तपापसक्तेषु च "असत् क्षरं च" असतां नित्यनिरवधिकभवदुरितप्रदत्वात्। आम्नातं हीदं द्वयम् "एष एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति, एष एवासाधु कर्म कारयति तं यमधो निनीषति" "असच्च सच्चैव च यद्विश्वं सदसतः परम्" इति ॥ ४८१—४८२ ॥

**[ ४८३. अविज्ञाता ]** तत्र साधुष्वपराधाननन्तानपि दृष्ट्वा न दण्डयति क्षमते चेति नैतावदेव, किन्तु तेषाम् "अविज्ञाता" "उच्यमानोऽपि परुषं नोत्तरं प्रतिपद्यते" इतिवत्। प्रपन्नापराधापरिगणनं तु गुण एव। अतो हि तातपादाः "सर्वज्ञतामेवमुपालभामहे त्वां मुग्ध एवाश्रितदोषजोषणः" इति। ये पुनर्ज्ञप्तिमात्रत्वात् सर्वज्ञस्य सर्वथाऽज्ञत्वपरं व्याचक्षते; ते श्रुत्याचार्यसेवौचित्यन्यायबधिराः शोच्या न निरसनार्हाः ॥४८३॥

**[ ४८४. सहस्रांशुः ]** अथ च सर्वज्ञः "सहस्रांशुः" सह-

स्वमपरिमिता अंशवो ज्ञानान्यस्येति । नन्वाश्रितापराधव्यतिरिक्त-सर्वज्ञ इति विप्रतिषिद्धम्; न, तदपरावेष्वतात्पर्येणोपेक्षा ह्यज्ञानं विवक्षिता । उपेक्षते हि तेषां न दोषः "दोषो यद्यपि तस्य स्यात्" इति । "अपि चेत्सुदुराचारो भजते मामनन्यभाक्" । इति ॥४८४॥

[ ४८५. विधाता ] न चैनं पापफलनियततन्नियामक-यमतद्यातनादयो भगवत्त्वमायामपि कृतापराधं बाधेरन्, तेषामपि तदधीनत्वादित्यभिप्रेत्याह "विधाता" । आह हि यम एव "अह-ममरवरार्चितेन धात्रा सम इति लोकहिताहिते नियुक्तः" इत्यादि । ब्राह्मवैष्णववामननारसिंहलैङ्गवैष्णवधर्मश्रीविष्णुतत्त्वभागवतप्र- भृतिषु यमकिङ्करसम्वादस्सर्वो द्रष्टव्यः ॥४८५॥

[ ४८६. कृतलक्षणः ] यद्येष दोषसहः, किं तर्हि हेया-द्वर्गादुपादेयस्य व्यावर्तकम् ? तत्राह "कृतलक्षणः" । कृतं हि तेन लक्षणमुपादेयानाम् "मित्रभावेन संप्राप्तम्" "सम्यग्व्यवसितो हि सः" इति स्वाभिमुख्यमात्रम् । श्रीहरिवंशे "चक्राङ्किताः प्रवेष्टव्या यावदागमनं मम । नामुद्रिताः प्रवेष्टव्या यावदागमनं मम ॥" श्रीविष्णुधर्मे "भवतां भ्रमतामत्र विष्णुसंश्रयमुद्रया । विनाऽऽ-ज्ञाभङ्गकृन्नैव भविष्यति नरः क्वचित् ॥" श्रीविष्णुतत्त्वे "चक्रा-दिधारणं पुंसां परसम्बन्धवेदनम् । पतिव्रतानिमित्तं हि वलया-दि विभूषणम् ॥" इत्येवं वा वैष्णवलक्षणम्, अन्यद्धेयलक्षणम् ॥ अतो न वैषम्यनैर्घृण्यादिदोषप्रसक्तिः ॥ ४८६ ॥

[ ४८७. गभस्तिनेमिः ] एवं कृतलक्षणा यमतत्किङ्कराणामप्रधृष्याः, यतस्तद्रक्षकोऽयम् "गभस्तिनेमिः" भास्वरसहस्रारचक्रः, गभस्तिर्दीप्यते ज्योतिर्मयं नेमिलक्षितं चक्रं यस्येति । यथा "वसति मनसि यस्य सोऽव्ययात्मा पुरुषवरस्य न तस्य दृष्टिपाते । तव गतिरथवा ममास्ति चक्रप्रतिहतवीर्यबलस्य सोऽन्यलोक्यः" इति ॥ ४८७ ॥

( ४८८. सत्त्वस्थः ) किं च कर्मणो निमित्तस्याप्यभावाच्च यमाद्यप्रधृष्याः,कुतस्तदभावः ? यस्मादेषां "सत्त्वस्थः" । 'सुपि स्थः' इति कः । हृदये स्थितः । "हृदि यदि भगवाननादिरास्ते हरिरपि चक्रगदाधरोऽव्ययात्मा । तदघमघविघातकर्तृभिन्नं भवति कथं सति चान्धकारमर्के ॥" "स्फटिकमणिशिलाऽमलः क्व विष्णुर्मनसि नृणांक च मत्सरादिदोषः" इत्यादि । तथा श्रीविष्णुधर्मे "किंकरा दण्डपाशौ वा न यमो न च यातनाः । समस्तास्तस्य यस्यात्मा केशवालम्बनः सदा ॥" श्रीवामने प्रह्लादः "तथाऽन्यदुक्तं नरसत्तमेन इक्ष्वाकुणा भक्तियुतेन नूनम् । ये विष्णुभक्ताः पुरुषाः पृथिव्यां यमस्य तेनिर्विषया भवन्ति ॥" इति ॥ ४८८ ॥

[४८९. सिंहः ] यदिदमविदन्तो यमादयस्तान् प्राकृतवद्धर्षयेयुः तान् हिनस्तीति 'सिंहः" । यथा 'प्रभवतिसंयमने ममापि विष्णुः" इति । अतश्च लैङ्गे मार्कण्डेयः "वासुदेवपरं दृष्ट्वा वैष्णवं दग्धकिल्बिषम् । देवाविभीतास्ववंयान्ति प्रणिपत्य यथागतम् ॥ दृष्ट्वा यमोऽपि वैभक्तं वैष्णवं दग्धकिल्बिषम् । उत्थाय प्राञ्जलिर्भूत्वा नना-

म रविनन्दन:॥ तस्मात्संपूजयेद्भक्त्या वैष्णवान् विष्णुवन्नर: स याति विष्णुसायुज्यं नात्र कार्या विचारणा ॥" तत्रैव कौशिकोपाख्याने भगवद्वाक्यम् "कौशिकादींस्तथा दृष्ट्वा ब्रह्मा लोकपितामह:। प्रत्युद्गम्य यथान्यायं स्वागतेनाभ्यपूजयत् ॥" इत्युपक्रम्य प्रस्तुतं यथेष्टं द्रष्टव्यम् । श्रीविष्णुतत्त्वे नरकप्रस्तावे "हरिपादप्रपन्नानां दूरीभूता: स्वभावत: । तेषां तु सर्वभूतानां हरिरेव पतिर्यत: ॥ वैष्णवेभ्योऽपि बिभ्यन्ति देवा नरक रक्षका: । अवमानक्रिया तेषां संहरत्यखिलं जगत् ॥ कालेनैतावता तेषु नरकेषु हि कश्चन । न दृश्यते महावीर्यप्रभावात् परमेष्ठिन: ॥" इति । श्रीविष्णुधर्मे "नरके पच्यमानस्तु यमेन परिभाषित: । किं त्वया नार्चितो देव: केशव: क्लेशनाशन: ॥" इत्यादि ॥ ४८९ ॥

( ४९०. भूतमहेश्वर: ) यथोक्ते समर्थ: यस्माद् "भूतमहेश्वर:" भूतेश्वराणां ब्रह्मयमादीनामपि नियन्ता ॥ ४९० ॥

( ४९१. आदिदेव: ) तेषामपि कारणं तदभिभवपटुप्रतापश्च "आदिदेव:" आदिर्द्योतमानश्चेति । "भीषाऽस्माद्वात: पवते" इत्यादि ॥ ४९१ ॥

( ४९२. महादेव: ) तै: क्रीडनकै: कन्दुकादिभिरिव क्रीडतीति "महादेव:" ॥ ४९२ ॥

( ४९३. देवेश: ) तेषां स्वामी च "देवेश:" ॥ ४९३ ॥

( ४९४. देवभृत् ) तेषां यथार्हविनियोगक्षमस्तान् बिभर्तीति "देवभृत्" ॥ ४९४ ॥

( ४९५. गुरु: ) तेषां वेदै: स्वस्वाधिकारबोधनाद् 'गुरु:'।

"यो वै वेदांश्च प्रहिणोति तस्मै" "हरिगुरुवशगोऽस्मि" इत्यादि "अग्निः सुवर्णस्य गुरुः" इत्यादि च "स पूर्वेषामपि गुरुः कालेनानवच्छेदात्" इति । इदं गुरुत्वं हयशिरोपाख्याने प्रसिद्धम् "जग्राह वेदानखिलान् रसातलगतान् हरिः । प्रादाच्च ब्रह्मणे राजन् ततः स्वां प्रकृतिं गतः" इति "रसातलाद्येन पुरा समाहृतास्समस्तवेदाः" इत्यादौ च ॥ ४६५ ॥

( ४६६. उत्तरः ) एवं ब्रह्मादेरासुरापदुत्तारणाद् "उत्तरः" "एवं स्तुतः स भगवान् पुरुषः सर्वतोमुखः । जहौ निद्रमथ तदा देवकार्यार्थमुद्यतः ॥" इति च "उत्तरः" ॥ ४६६ ॥

( ४६७. गोपतिः ) अशेषच्छन्दोभाषावेषवाङ् निर्वाहकः "गोपतिः" । "वाक्पतये" इति तन्मन्त्रवर्णे ॥ ४९७ ॥

( ४६८. गोप्ता ) एवं सर्वविद्यापालनाद् "गोप्ता" । "सर्वविद्येश्वराय" इति तन्मन्त्रवर्णः ॥४६८॥

( ४६६. ज्ञानगम्यः ) परविद्यावेद्यः समाधिगम्यो "ज्ञानगम्यः" । "पोरदुपधात्" इति यत्प्रत्ययः । "वरवाजिमुखं ध्यायेदथ वागीश्वरं प्रभुम्" इति ॥ ४६६ ॥

[ ५००. पुरातनः ] नेदं विद्याप्रद्योतनमद्यैव, किं तु प्रतिकल्पमिति "पुरातनः" । "सायंचिरम्" इत्यादिना ट्यु ट्युलौ तुडागमश्च ॥ ५०० ॥

इति श्रीमद्विष्णुसहस्रनामविवरणे
भगवद्गुणदर्पणे पञ्चमं
शतकं समाप्तम्

———

## ॥ अथ षष्ठशतकं प्रारम्भः ॥

तत्वजातं

( ५०१ शरीरभूतभृत् ) शरीरभूतं तत्त्वजातं बिभर्तीति "शरीरभूतभृत्" । "तच्छिरः" "तस्य मूर्धा समभवद् द्यौस्सनक्षत्रदेवता" इत्यारभ्य "एतद्धयशिरः कृत्वा नानामूर्तिभिरावृतम्" इत्यन्तम् ॥ ५०१ ॥

५०२. भोक्ता ) "यत्तु तत् कथितं पूर्वं त्वया हयशिरो महत् । हव्यकव्यभुजो विष्णोरुदक्पूर्वे महोदधौ" इति 'भोक्ता' ५०२

( ५०३. कपीन्द्रः ) अथैवं स्ववर्धितवेदविहितकर्मप्रवर्तकः पुरा रामः स्वविसदृशलीलामनुजावतारे स्वदासानां विसदृशतरकपिरूपं प्रपन्नानां देवानामिन्द्रः "कपीन्द्रः" । "सर्वलोकेश्वरः साक्षाल्लोकानां हितकाम्यया । सर्वैः परिवृतो देवैर्वानरत्वमुपागतैः ॥" ॥ ५०३ ॥

( ५०४. भूरिदक्षिणः ) स एव जगदाचार्यकाय इयमेधादिभिर्यजमानो "भूरिदक्षिणः" । "अश्वमेधशतैरिष्ट्वा" इत्यादि । ॥ ५०४ ॥

( ५०५. सोमपः ) तत्रैव सोमपीथी "सोमपः" । ५०५ ॥

( ५०६. अमृतपः ) "यत् किञ्चिद्धूयते वह्नौ हविर्मन्त्रै-

विधानतः । तत् सर्वममृतं कृत्वा विष्णवे संप्रयच्छति" ॥ इति, 'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च" इति हविः परिणाम-रूपममृतं स्वयमेव पिबति चेति "अमृतपः" । स्वानुष्ठानानुविधायिभ्यः स्वानुभवरूपममृतं परमे व्योम्नि पातीति वा "अमृतपः" "यत्र देवा अमृतमानशानास्तृतीये धामान्यभ्यैरयन्त" इति "अमृतस्यैष सेतुः" "यस्य च्छायाऽमृतम्" इति ॥ ५०६ ॥

( ५०७. सोमः ) स्वस्मै स्वानुभवितृभ्यश्चामृतायमानः "सोमः" । सोमशब्दो ह्यमृतवाची ।"तृतीयस्यामितो दिवि सोम आसीत्' "स खल्वमृतोपमः" "महता तपसा राम महता चापि कर्मणा । राज्ञा दशरथेनासि लब्धोऽमृतमिवामरैः ॥" इति, "अमृतस्येव नातृप्यन् प्रेक्षमाणा जनार्दनम्" इति, 'शान्तिसमृद्धममृतम्' इति च ॥ ५०७ ॥

( ५०८. पुरुजित् ) "सत्येन लोकान् जयति दीनान् दानेन राघवः । गुरून् शुश्रूषया वीरो धनुषा युधि शात्रवान् ॥"इति बहूनां जयात् "पुरुजित्" ॥ ५०८ ॥

( ५०९. पुरुसत्तमः ) "स्नेहो मे परमो राजन् त्वयि नित्यं प्रतिष्ठितः । भक्तिश्च नियता वीर भावो नान्यत्र गच्छति ॥"- "यावद्रामस्य कथा वीर"इत्यादिवत् स्वगुणामृतसमुद्रपिपासुषु हनुमदादिषु महत्सु अस्तितम इति "पुरुसत्तमः" ॥ ५०९ ॥

( ५१०. विनयः ) मारीचादयोऽपि वीर्यादिनाऽस्माद्विनीय-

न्ते दम्यन्त इति "विनयः" ॥ ५१० ॥

( ५११. जयः ) आश्रितैर्जीयन्ते विधेयीक्रियन्त इति 'जयः' यथा "आज्ञाप्योऽहं तपस्विनाम्" "ततो नारायणो विष्णुर्नियुक्तः सुरसत्तमैः" इति ॥ ५११ ॥

( ५१२. सत्यसन्धः ) तेषु सत्या सन्धा प्रतिज्ञाऽस्येति "सत्यसन्धः" । यथा "अप्यहं जीवितं जह्यां त्वां वा सीते सलक्ष्मणाम् । न तु प्रतिज्ञां संश्रुत्य ब्राह्मणेभ्यो विशेषतः ॥" "सत्यसन्धो जितेन्द्रियः" इति च ॥ ५१२ ॥

( ५१३. दाशार्हः ) दाशो दानं भक्तैः स्वस्मै स्वात्मनिवेदनरूपं तेभ्यो वा स्वात्मसमर्पणरूपमर्हतीति "दाशार्हः" । "अर्हः" इत्यच् । एवं महार्ह इत्यादि । कृष्णत्वे दशार्हाणामपत्यत्वाद्वा ( दाशार्हः ) ॥ ५१३ ॥

[ ५१४. सात्त्वतांपतिः ] परं ब्रह्म सत्त्वं वा सत् । "तदस्यास्ति" इति मतुप् । "संज्ञायाम्" इति मतुपो वकारः । "तसौ मत्वर्थे" इति भसंज्ञा । सत्त्वान् ब्रह्मवित् सात्त्विको वा । तस्येदं कर्म शास्त्रं वा सात्त्वतम् । ततः 'तत् करोति तदाचष्टे" इति णिच् "णाविष्ठवत् प्रातिपदिकस्य" इतीष्ठवद्भावाट्टिलोपः । ततः क्विपि णि लोपे च कृते सात्त्वताः—भागवताः । तेषां पतिः "सात्त्वतांपतिः" । 'निराशीः कार्यसंयुक्तान् सात्त्वतांश्चाप्यकल्पयम् । सात्त्वतज्ञानदृष्टोऽहं सात्त्वतः सात्त्विकी ( स्वतो ) पते" ॥ इत्युक्तं ध्वनयति अनयैव व्युत्पत्त्या । यादवधुरन्धरत्वाद्वा (सात्त्वतां पतिः) ॥५१४॥

विधानतः । तत् सर्वममृतं कृत्वा विष्णवे संप्रयच्छति" ॥ इति, 'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च" इति हविः परिणाम· रूपममृ तं स्वयमेव पिबति चेति "अमृतपः" । स्वानुष्ठानानुविधायिभ्यः स्वानुभवरूपममृतं परमे व्योम्नि पातीति वा "अमृतपः" "यत्र देवा अमृतमानशानास्तृतीये धामान्यभ्यैरयन्त" इति "अमृतस्यैप सेतुः" "यस्य च्छायाऽमृतम्" इति ॥ ५०६ ॥

( ५०७. सोमः ) स्वस्मै स्वानुभवितृभ्यश्चामृतायमानः "सोमः" । सोमशब्दो ह्यमृतवाची ।"तृतीयस्यामितो दिवि सोम आसीत्' "स खल्वमृतोपमः" "महता तपसा राम महता चापि कर्मणा । राज्ञा दशरथेनासि लब्धोऽमृतमिवामरैः ॥" इति, "अमृतस्येव नातृप्यन् प्रेक्षमाणा जनार्दनम्" इति, 'शान्तिसमृद्धममृतम्' इति च ॥ ५०७ ॥

( ५०८. पुरुजित् ) "सत्येन लोकान् जयति दीनान् दानेन राघवः । गुरून् शुश्रूषया वीरो धनुपा युधि शात्रवान् ॥"इति बहूनां जयात् "पुरुजित्" ॥ ५०८ ॥

( ५०९. पुरुसत्तमः ) "स्नेहो मे परमो राजन् त्वयि नित्यं प्रतिष्ठितः । भक्तिश्च नियता वीर भावो नान्यत्र गच्छति ॥"· "यावद्रामायणकथा वीर"इत्यादिवत् स्वगुणामृतसमुद्रपिपासुपु हनुमदादिपु महत्सु अतितम इति "पुरुसत्तम." ॥ ५०९ ॥

( ५१०. विनयः ) मारीचादयोऽपि वीर्यादिनाऽस्माद्विनीय·

न्ते दम्यन्त इति "विनयः" ॥ ५१० ॥

( ५११. जयः ) आश्रितैर्जीयते विधेयीक्रियत इति 'जयः' यथा "आज्ञाप्योऽहं तपस्विनाम्" "ततो नारायणो विष्णुर्नियुक्तः सुरसत्तमैः" इति ॥ ५११ ॥

( ५१२. सत्यसन्धः ) तेषु सत्या सन्धा प्रतिज्ञाऽस्येति "सत्यसन्धः" । यथा "अप्यहं जीवितं जह्यां त्वां वा सीते सलक्ष्मणाम् । न तु प्रतिज्ञां संश्रुत्य ब्राह्मणेभ्यो विशेषतः ॥" "सत्यसन्धो जितेन्द्रियः" इति च ॥ ५१२ ॥

( ५१३. दाशार्हः ) दाशो दानं भक्तैः स्वस्मै स्वात्मनिवेदनरूपं तेभ्यो वा स्वात्मसमर्पणरूपमर्हतीति "दाशार्हः" । "अर्हः" इत्यच् । एवं महार्ह इत्यादि । कृष्णत्वे दशार्हाणामपत्यत्वाद्वा ( दाशार्हः ) ॥ ५१३ ॥

[ ५१४. सात्त्वतांपतिः ] परं ब्रह्म सत्त्वं वा सत् । "तदस्यास्ति" इति मतुप् । "संज्ञायाम्" इति मतुपो वकारः । "तसौ मत्वर्थे" इति भसंज्ञा । सत्त्वान् ब्रह्मवित् सात्त्विको वा । तस्येदं कर्म शास्त्रं वा सात्त्वतम् । ततः 'तत् करोति तदाचष्टे" इति णिच् "णाविष्ठवत् प्रातिपदिकस्य" इतीष्ठवद्भावाट्टिलोपः । ततः क्विपि णि लोपे च कृते सात्त्वताः—भागवताः । तेषां पतिः "सात्त्वतांपतिः" । 'निराशीः कार्यसंयुक्तान् सात्त्वतांश्चाप्यकल्मषम् । सात्त्वतज्ञानदृष्टोऽहं सात्त्वतः सात्त्विकी ( स्वतो ) पते" ॥ इत्युक्तं ध्वनयति अनयैवव्युत्पत्त्या । यादवधुरन्धरत्वाद्वा (सात्त्वतां पतिः) ॥५१४॥

( ५१५. जीवः ) तान् भागवतान् आत्मनाशाद्धशावस्थं स्वपरिचर्यया जीवयतीति "जीवः" "आनन्दमूर्तिर्भगवान् हरिस्त्रै-लोक्यपूजितः । द्रष्टुं न सहते देवि क्लिष्टान् स्वपरिचारकान् ॥" इति ॥ ५१५ ॥

( ५१६. विनयिता ) तान् राजकुमारलालनेन रक्षतीति "विनयिता" । "नय गतौ रक्षणे च" ॥ ५१६ ॥

( ५१७. साक्षी ) तदर्थं सद्वृत्तसाक्षात्कारात् "साक्षी" ॥

( ५१८. मुकुन्दः ) तैरैकान्त्यगरिम्णा प्रार्थितः स्वयं मुक्तिभूमिं ददातीति 'मुकुन्दः" । पृषोदरादित्वात् साधुः ॥ ५१८ ॥

[ ५१९. अमितविक्रमः ] तेषां ध्यानाराधनानुसन्धेय-सत्त्वनिकराधारशक्तिधारणात् "अमितविक्रमः" । श्रीपौष्करे "का-लवैश्वानरश्शायी नाना स्वाधो निवासिनः । आधारशक्तिसंज्ञस्य ह्यमूर्तस्था च वै विभोः । अभिमानतनुर्यो वै नानाभेदैश्च वर्तते ॥" इति ॥ ५१९ ॥

[ ५२० अम्भोनिधिः ] पातालाम्भस्यखिलजगदाधार-पीठकमठात्मना निधीयत इति "अम्भोनिधिः" "अनन्तबलशक्तये भुवनभृते कच्छपात्मने" इति तन्मन्त्रवर्णात् ॥ ५२० ॥

[ ५२१ अनन्तात्मा ] तदुपरि जगदाधारस्तम्भभोगी-न्द्रस्यात्मतया तिष्ठतीति "अनन्तात्मा" । श्रीजयायाम् 'आधार

शक्तेरुपरि विमलं दीप्तविग्रहम् । ज्वालाशतसमाकीर्णं शङ्खचक्रगदाधरम् ॥ अनन्तेशं न्यसेत्" इति "चक्रलाङ्गलहस्तं च प्रणमन्तं परावरम्" इति च ॥ ५२१ ॥

[ ५२२. महोदधिशयः ] स एवान्तकाले तस्मिन्नेवानन्तभोगपर्यङ्के महोदधौ शेते इति "महोदधिशयः"। "अधिकरणे शेतेः" इत्यच् । एवं भूशय इत्यादि ॥ ५२२ ॥

( ५२३. अन्तकः ) तदा सर्वस्यान्तं करोतीति "अन्तकः"। "तत् करोति" इति णिच्, ण्वुल् । "अन्ते पृथिव्यां सलिले दृश्यसे त्वं महोरगो" इति, वैष्णवे "आस्ते पातालमूलस्थः शेषोऽशेषसुरार्चितः" इति, "यस्यैषा सकला पृथ्वी फणामणिशिखारुणा । आस्ते कुसुममालेव कस्तद्वीर्यं वदिष्यति ॥" "गन्धर्वाप्सरसस्सिद्धाः सकिंनरमहोरगाः । नान्तं गुणानां गच्छन्ति तेनानन्तोऽयमुच्यते ।' "तस्य वीर्यं प्रभावं च स्वरूपं रूपमेव च । न हि वर्णयितुं शक्यं ज्ञातुं वा त्रिदशैरपि ॥" "कल्पान्ते यस्य वक्त्रेभ्यो विषानलशिखोज्ज्वलः । संकर्षणात्मको रुद्रो निष्क्रम्यात्ति जगत्त्रयम् ॥" इत्यादि

[ ५२४. अजः ] अस्मिंस्तत्त्वावसाने प्रणवप्रकृतिभूताकारवाच्यतया स्मर्तव्यत्वाद् "अजः" अकारवाच्यतया जात इति, "तस्य प्रकृतिलीनस्य यः परः स महेश्वर" इति ॥ ५२४ ॥

[ ५२५. महार्हः ] तत्र प्रणवेन महम् आत्मनिवेदनपूर्वकं पूजनमर्हतीति "महार्हः"। "ब्रह्मणे त्वा महस ओमित्यात्मानं

युञ्जीत, एतद्वै महोपनिषदं देवानां गुह्यम्" इति ॥ ५२५ ॥

[ ५२६. स्वाभाव्यः ] एव मनेन मन्त्रेण स्वभूतैरात्मभिः स्वामित्वेनाभिमुख्येनावश्यं भावनीयत्वात् "स्वाभाव्यः" । "ओरावश्यके" इति ण्यत् । 'श्योजीवनेच्छा यदि ते स्वसत्तायां स्पृहा यदि । आत्मदास्यं हरेः स्वाम्यं स्वभावं च सदा स्मर' ॥ इति । "नान्यो हेतुर्विद्यते ईशनाय" इति नित्यस्य स्वस्वामिभावस्य स्वाभाविकत्वेन भाव्यत्वाद्वा ( स्वाभाव्यः ) ॥ ५२६ ॥

[ ५२७. जितामित्रः ] एतद्रहस्यावबोधविरोध्यहंकार ममकारकामादयो जितास्तेषामनेनेति "जितामित्रः" । कामादयो ह्येषाममित्राः । "काम एष क्रोध एष रजोगुणसमुद्भवः" । इत्युपक्रम्य "जहि शत्रुं महाबाहो कामरूपं दुरासदम्" इत्यन्तम् ॥ ५२७ ॥

[ ५२८. प्रमोदनः ] स्वसम्बन्धिनां तत्प्रथमानुसन्धानप्रहर्षः प्रयोजनमिति "प्रमोदनः" ॥ ५२८ ॥

[ ५२९. आनन्दः ] अथ कपिलमूर्तिः । आनन्दवल्लीमीमांस्यमानवाङ्मनसदुर्ग्रहो महानन्दोऽस्यास्तीति 'आनन्दः' । अर्श-आदित्वादच् ॥ ५२९ ॥

[ ५३० नन्दनः ] तमानन्दं यथोक्तायां मुक्तौ प्रापय्य नन्दयतीति "नन्दनः" । "एष ह्येवानन्दयाति" "एतस्यैवानन्दस्य-अन्यानि भूतानि मात्रामुप जीवन्ति" इति वा ॥ ५३० ॥

( ५३१. नन्दः ) एवमनन्त भोग्यभोक्तृभोगतदुपकरणैः

एवमनंत

समृद्ध्यते तस्मिन्निति "नन्दः" । अधिकरणे घञ् ॥ ५३१ ॥

( ५३२. सत्यधर्मा ) एवमा च प्रक्रमाद् आ च स्वप्राप्तेरार्जवात् "सत्यधर्मा" सत्यवृत्तः ॥ ५३२ ॥

( ५३३ त्रिविक्रमः ) ईदृशेन महामहिम्ना वाच्येन विक्रान्तत्रिवेदः "त्रिविक्रमः" । यथा "त्रिरित्येयं त्रयो वेदाः कीर्तिताः मुनिसत्तमैः । क्रमते तांस्तथा सर्वान् त्रिविक्रम इति स्मृतः ॥" "सर्वे वेदा यत्रैकं भवन्ति" "नारायणपरा वेदाः" इति ।५३३।

( ५३४. महर्षिः ) यथोक्तवेददर्शनाद् "महर्षिः" कपिलमूर्तिः । "श्रुतीर्ऋग्गाथा वक्त्रेभ्यः प्रोद्गिरन्नमतः स्मरेत्" इति तद्ध्याने । "ऋषिं प्रसूतं कपिलं महान्तम्" "सांख्यस्य वक्ता कपिलः परमर्षिः स उच्यते" इति च ॥ ५३४ ॥

( ५३५. कपिलाचार्यः ) कपिलश्चासावाचार्यश्चेति "कपिलाचार्यः" । कबृ वर्णे" "कवेः पश्च" इतीलच् प्रत्ययः पकारश्चान्तादेशः । "निर्धूमाङ्गारवर्णाभं शङ्खचक्राक्षसूत्रिणम्" इति तद्ध्याने । स्वतत्त्वसंविदाचयनादाचार्यः "संवित्प्रकाशनाय" इति तन्मन्त्रवर्णे ॥ ५३६ ॥

( ५३६. कृतज्ञः ) सापराधसगरापत्येऽप्यंशुमति स्वाभिनम्रत्वसुकृतमेव ज्ञातवानिति "कृतज्ञः" । वैष्णवे "कपिलमुपगम्य भक्तिनम्रस्तदा तुष्टाव स चैनं भगवानाह वरं वृणीष्वेति च" इति ।

( ५३७. मेदिनीपतिः ) "यस्येयं वसुधा सर्वा वासुदेव

स्य धीमतः । कापिलं रूपमास्थाय धारयत्यनिशं धराम् ॥" इति "मेदिनीपतिः" ॥ ५३७ ॥

( ५३८. त्रिपदः ) भोग्यभोक्तृनियन्तृणि तत्त्वानि ज्ञाप्यतया पदान्यस्येति "त्रिपदः"। यथा "सत्त्वानामुपकाराय प्रधानं पुरुषं परम् । दर्शयिष्यामि लोकेषु कापिलं रूपमास्थितः ॥" इति, प्रणवे त्रीणि पदानि तद्वाचकानीति वा, "तथैवासं त्रिककुद्वो वाराहं रूपमास्थितः" इति वा त्रिपदः ॥ ५३८ ॥

( ५३९. त्रिदशाध्यक्षः ) स एव ब्रह्मादेः प्रलयापत्समत्वात् "त्रिदशाध्यक्षः" ॥ ५३९ ॥

( ५४०. महाशृङ्गः ) अग्रलग्नमहीमण्डलदंष्ट्रो "महाशृङ्गः" "एकशृङ्गो वराहस्त्वम्" "दंष्ट्राग्रविन्यस्तमशेषमेतद् भूमण्डलं नाथ विभाव्यते ते । विगाहतः पद्मवनं विलग्नं सरोजिनीपत्रमिवोढपङ्कम् ॥" इति ॥ ५४० ॥

( ५४१. कृतान्तकृत् ) कृतान्तमन्तकाभं हिरण्याक्षं कृन्तन्निति "कृतान्तकृत्"। यथा "हतो हिरण्याक्षमहासुरः" इति । वाराहस्मृतिपुराणयोः स्वसिद्धान्तकरणाद्वा ॥५४१॥

( ५४२. महावराहः ) "ततः समुत्क्षिप्य धरां स्वदंष्ट्रया महावराहः स्फुटपद्मलोचनः । रसातलादुत्पलपत्रसंनिभः समुत्थितो नील इवाचलो महान् ॥" इति "महावराहः" ॥ ५४२ ॥

( ५४३. गोविन्दः ) "नष्टां च धरणीं पूर्वमविन्दं च गुहागताम् । गोविन्द इति तेनाहम्" इति "गोविन्दः" ॥५४३॥

[ ५४४. सुषेणः ] अथान्यद्रहस्यम् । शोभना शुद्धसत्त्वमयी बद्धमुक्तनित्यविजयोपकरणत्वात् सेनेव पञ्चोपनिषन् कायोऽस्येति "सुषेणः" ॥ ५४४ ॥

[ ५४५ कनकाङ्गदी ] तन्मयैरुक्तरूपसौन्दर्यसम्भुक्त-गौरङ्गदोपलक्षितैर्दिव्यभूषणैर्नित्ययोगात् "कनकाङ्गदी" । नित्य-योग इनिः । कनकशब्दोऽप्राकृतयथोक्तविलक्षणद्रव्यपञ्चकलक्ष-कः । ॥ ५४५ ॥

[ ५४६. गुह्यः ] एवं परमोपनिषद्विषयेण वपुषा "गुह्यः" । "शंसिदुहिगुहिभ्यो वेति वक्तव्यम्" इति क्यप् ॥ ५४६ ॥

[ ५४७. गभीरः ] तदभिव्यक्तैश्वरमहागाम्भीर्यो "गभीरः" । 'गभीरगम्भीरौ" इति गाहेरीरन् प्रत्ययो ह्रस्वत्वं भकारादेशश्च निपात्यते । तत्संपृक्तो हि कतकसंकलितमिव सलिलमनाद्यविद्याकलुषोऽपि संसारी प्रसीदति, किं पुनः स्वभावदीप्रो भगवान् ॥ ५४७ ॥

( ५४८ गहनः ) अथ च "गहनः" दुरवगाहः । न हि स्वच्छसुप्रहान्तर्वृत्तोऽपि रत्नाकरो जानुदघ्नः ॥ ५४८ ॥

[ ५४९. गुप्तः ] "गुप्त" श्च तद्गोरवज्ञैः पूर्वगुरुभिः । ५४९ ।

( ५५०. चक्रगदाधरः ) कुत्र किंलक्षणो गुप्तः ? "तमसः परमो धाता शङ्खचक्रगदाधरः" इति "चक्रगदाधरः" । वक्तनि-त्यरूपनिभूषणवत् पञ्चशक्तिमयनित्यदिव्यायुध इत्यर्थः ॥५५०॥

[ ५५१. वेधाः ] एवं विविधमनन्तमहाविभवं नित्यं विद-

धातीति "वेधाः"। "विधाञो वेध च" इत्यसिप्रत्ययो वेधादेशश्च, "तमसः परमो धाता" इति ॥ ५५१ ॥

[ ५५२. स्वाङ्गः ] यथा तत्रैव समग्रस्वासाधारणमङ्गं. छत्र-चामरादिसर्वाधिराज्यपरिबर्हजातं नित्यमस्येति "स्वाङ्गः" ।५५२।

[ ५५३. अजितः ] प्राकृतैरुत्पत्तिमरणादिभिर्न जिता य-थोक्तद्रव्योपादाना पुरी अजिताऽस्यास्तीति "अजितः"। अर्श आ-द्यजन्तं वा। "पुरं हिरण्मयीं ब्रह्मा विवेशापराजिताम्" इति ॥५५३॥

[ ५५४. कृष्णः ] तन्मयमेघमेचकचारुवर्णः "कृष्णः"। "कृषेर्वर्णे" इति नक्प्रत्ययः। तन्मयरूप एव वाराहाद्यवतारोऽपीति च निरुच्यते। "कृषामि मेदिनीं पार्थ भूत्वा कृष्णायसो महान्। कृष्णो वर्णश्च मे यस्मात्तेन कृष्णोऽहमर्जुन ॥" इति। यथोक्तं तत्रैं व्यनक्ति श्रीविष्णुतत्त्वादौ "एकैव पञ्चधा भूता प्रधाना विम-र्शात्मिका। सर्वशक्तिसमेतापि पुरुषो नियतीरिमाः। न जहाति स्वभावोत्थकारुण्येन समाश्रितः। परमेष्ठी पुमान् विश्वो निवृत्तिः सर्वं एव च। पञ्चैताः शक्तयः प्रोक्ताः परस्य परमात्मनः ॥" इति। तेषां नरत्वं द्विविधमुक्त्वा "मत्स्यकूर्मवराहाणामाविर्भावो महात्मनः। अनयैव द्विजश्रेष्ठ नान्यया तद्विरोधतः ॥" इति ।५५४।

[ ५५५. दृढः ] अनयैव नित्यव्यक्तावुपासकानामनुग्रहाय व्यूहोऽपि किञ्चित् स्थूलः "दृढः"। "दृह दृहि वृद्धौ" "दृढः स्थूल-बलयोः" इति निपातितः ॥ ॥ ५५५ ॥

[ ५५६. संकर्षणः ] क एवम्? "संकर्षणः"। "संसा-

रे चिद्वचितोरात्मनि समं कर्षणात् समं कर्म नयति" इति मौला: ॥

[ ५५७. अच्युत: ] व्यूहेऽपि "च्यवनोत्पत्तियुक्तेपु ब्रह्मेन्द्रवरुणादिपु । यस्मान्न च्यवसे स्थानात् तस्मात् संकीर्त्यसेऽच्युतः" इति "अच्युतः" ॥ ५५७ ॥

[ ५५८. वरुण: ] "येनावृतं खं च दिवं महीं च" "तेनेदमावृतम्" इति "वरुणः" । "वृञ् वरणे" "कृवृदारिभ्य उनन्" ॥ ५५८ ॥

[ ५५९. वारुण: ] तं स्वामित्वेन वृणुत इति वरुणः, तत्र भवो "वारुणः" । "तेपु चाप्यहम्" इति ॥५५९॥

( ५६०. वृक्ष: ) तेपु छायातरुवदावृतानामुपजीव्यसर्वस्वस्तरकृतोपमर्दसहस्रसहो वृक्षते इति "वृक्षः" । "वृक्ष वरणे" । "निवासवृक्षस्साधूनामापन्नानां परा गतिः" "वृक्ष इव स्तब्धो दिवि तिष्ठत्येकः" "समाश्रिताद् ब्रह्मतरोरनन्तान्निःसंशयः पक्वफलप्रपातः" इत्यादिवत् ॥ ५६० ॥

( ५६१. पुष्कराक्ष: ) तेषां प्रसादवर्षेण पोषके अक्षिणी यस्य सः "पुष्कराक्षः" । पुष्करम्. "पुषः करन्" इति करन् प्रत्ययः किद्भावः ॥ ५६१ ॥

( ५६२. महामना: ) तेष्वगाधोदारविस्तृतमनाः "महामनाः" ॥ ५६२ ॥

५६३. भगवान् ) एवमशेषदोषविरोधिकल्याणस्वरूपतया परमपूज्यो "भगवान्" ॥ ५६३ ॥

( ५६४. भगहा ) गुणतोऽपि तथा "भगहा"। "ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥" तं हन्ति गच्छतीति हन्तिर्गमनकर्मा । अत्र वैष्णवे षष्ठेंऽशे भगवच्छब्दनिर्वचनप्रकरणं लेख्यम् ॥ ५६४ ॥

( ५६५. नन्दी ) एवमसौ व्यूहे संकर्षणः स्वावतारे नन्दगोपेन पितृमान् "नन्दी," मधुवल्लवीसेवानन्दवान् वा ॥५६५॥

[ ५६६. वनमाली ] स्वसृज्यभूतसूक्ष्मसारसौरभ्याभिमानिन्या वैजयन्त्या नित्ययोगी "वनमाली" ॥ ५६६ ॥

( ५६७. हलायुधः ) चक्रभूतसमृद्धिकृषीवलहलपरिकरो "हलायुधः"। यथा "बलभद्रं समृद्ध्यर्थं सीरकर्मणि कीर्तयेत्" इति।

( ५६८. आदित्यः ) स्ववाचकादावर्णादात इत्यः प्राप्य इति "आदित्यः"। "एतिस्तुशास्वृदृजुषः क्यप्"। आकारो हि संकर्षणबीजमन्त्रः। भूतपूर्वादितिभावाया देवक्या अपत्यमिति वा "आदित्यः"। यथा वैष्णवे धर्मे देवकीं प्रति भगवान् "दाक्षायणी त्वमदितिः संभूता वसुधातले। नित्यैव त्वं जगद्धात्री प्रसादं ते करोम्यहम् ॥" इति ॥ ५६८ ॥

( ५६९. ज्योतिरादित्यः ) अथ नारायणविषयः। दिव्याश्चर्यज्योतिर्मयत्वादपूर्वो "ज्योतिरादित्यः"। प्रसिद्धो ह्यादित्यस्तत्तेजस्वि तमायेत। श्रीनारायणीये "तयोर्भवेन युध्यतोः" "निष्प्रभाणिच तेजांसि ब्रह्मा चैवासनाच्च्युतः" इति ॥ ५६९ ॥

( ५७०. सहिष्णुः ) तत्र तदपराधसहनात् "सहिष्णुः"।

तत्रैव "प्रसादयामास भवो देवं नारायणं प्रभुम् । शरणं जगतामाद्यं वरेण्यं वरदं हरिम् ॥ तथैव वरदो देवो जितक्रोधो जितेन्द्रियः । प्रीतिमानभवत् तत्र रुद्रेण सह संगतः ॥" इति ॥ ५७० ॥

( ५७१. गतिसत्तमः ) स एव परमधर्माध्वदेशिकत्वेन "गतिसत्तमः" गतौ प्रत्ययिततम इति । "अहो ह्यनुगृहीतो हि धर्म एभिः सुरैरिह" इति ॥ ५७१ ॥

( ५७२. सुधन्वा ) सुधानिमित्तसुरासुरसमरसंहारिशारासनत्वात् "सुधन्वा" । "धनुषश्च" इति समासान्तोऽनङ् । "तत्र दिव्यं धनुर्दृष्ट्वा नरस्य भगवानपि" "नरस्ततो वरकटकाग्रभूषणैर्महेषुभिः पवनपदं समावृणोत्" इति ॥ ५७२ ॥

( ५७३. खण्डपरशुः ) परशुना रौद्रसंग्रामखण्डनात् "खण्डपरशुः" । तत्रैव "अथ रुद्रविघातार्थमिषीकां नर उद्धरन् । मन्त्रैश्च संयुयोजाशु सोऽभवत् परशुर्महान् ॥ क्षिप्तश्च सहसा रुद्रे खण्डनं प्राप्तवांस्तदा । ततोऽहं खण्डपरशुस्ततः परशुखण्डनात् ॥" इति ॥ ५७३ ॥

[ ५७४. दारुणः ] एवं बाह्याभ्यन्तरारिदारणाद् 'दारुणः' "कृवृदारिभ्य उनन्" ॥ ५७३ ॥

( ५७५. द्रविणप्रदः ) अथ व्यासावतारः । समग्रं शास्त्रतदर्थरूपं द्रविणं ददातीति "द्रविणप्रदः" । यथा "वहन् वै वामद-

स्तेन सर्वशास्त्रार्थसञ्चयम् । दक्षिणेन च शास्त्रार्थानादिशंश्च यथास्थितान् ॥" इति तद्ध्याने ॥५७५॥

[ ५७६. दिविस्पृक् ] परविद्यया दिवि च परमपदे स्थितं स्वतत्त्वरहः स्पृशतीति "दिविस्पृक्" । "स्पृशोऽनुदके क्विन्""हलदन्तात्" इत्यलुक् । "विदितपरमार्थः" इति तन्मन्त्रे ॥५७६॥

[ ५७७. सर्वदृक् ] अन्यदपि सर्वं वैभवं पश्यतीति "सर्वदृक्" । "दृशेश्चेति वक्तव्यम्" इति क्विन्प्रत्ययः । "क्विन्प्रत्ययस्य कुः" इति कुत्वम् । "विद्रुपे" इति तन्मन्त्रे ॥ ५७७ ॥

[ ५७८. व्यासः ] "युगानुसारबोधानामवेदजननाय वै । विभजंस्तु चतुर्धा वै वेदमेकं त्रिकालवित् ॥" इति "व्यासः" ॥

( ५७९. वाचस्पतिः ) पञ्चमवेदरूपाया वाचः स्वामी "वाचस्पतिः" ॥ ५७९ ॥

( ५८०. अयोनिजः ) सारस्वतावतारे भगवद्वाक्संभवत्वाद् "अयोनिजः" । "अथ भूयो जगत् स्रष्टा भोशब्देनानुनादयन् । सरस्वतीमुच्चचार तत्र सारस्वतोऽभवत् ॥" इति ॥ ५८० ॥

[ ५८१ त्रिसामा ] ऋगायकबृहद्रथन्तरवामदेव्यप्रधानसामकत्वात् "त्रिसामा" । ५८१ ॥

[ ५८२. सामगः ] स्वयं च स्वानुभवप्रीत्या तादृशि गायतीति "सामगः" । "गापोष्टक्" इति टक् । तदनुभवाह्लादो हि साम गापयते "एतत् साम गायन्नास्ते" इति ॥ ५८२ ॥

( ५८३. साम ) स्वगायकानामपि पापं स्यतीति "साम" । "षो अन्तकर्मणि" इति, "सातिभ्याम्" इत्यादिना मनिन् ॥५८३॥

( ५८४. निर्वाणम् ) एवमपहतपाप्मनां परमगतिनिमित्तं "निर्वाणम्" । "निर्वाणोऽवाते" इति निपातितः ॥ ५८४ ॥

( ५८५. भेषजम् ) अतोऽसाध्यसंसारव्याधेः परमं "भेषजम्" । स्तवराजे "नारायणाद्दषिगणास्तथा सिद्धा महोरगाः । देवा देवर्षयश्चैव यं विदुर्दुःखभेषजम् ।।" इति ॥ ५८५ ॥

( ५८६. भिषक् ) सम्यग्विदितनिदानचिकित्सो 'भिषक्' ।

( ५८७. संन्यासकृत् ) कथं चिकित्सति ? सात्त्विकेन संन्यासेन रजस्तमसी कृन्ततीति "संन्यासकृत्" । भर्तरि भरन्यासः संन्यासः, स हि भवचिकित्सा "वेदान्तविज्ञानसुनिश्चितार्थाः" इत्यादिश्रुतेः ॥ ५८७ ॥

( ५८८. शमः ) तदर्थं "भोक्तारं यज्ञतपसाम्" इत्यादिनेच्छाभयक्रोधशान्त्युपायमाचष्ट इति "शमः" । "तदाचष्टे" इति णिच्, पचाद्यचि कृते रूपम् ॥ ५८८ ॥

५८६. शान्तः ) स्वयं च "शान्तः" सत्यपि समुद्रेकहेतौ महिमसमुद्रे निस्तरङ्गसमुद्रवदनुद्रिक्तस्तद्दर्शिनां हि प्रभावः, यं जगौ पतञ्जलिः ' तत्सन्निधौ वैरत्यागः" इति । अर्वाचीनश्च "परितः पटु बिभ्रदेनसां दहनं धाम विलोकनक्षमम् । मधुरैरवशानि लम्भयन्नपि तिर्यञ्चि शमं निरीक्षितैः ॥" इति ॥ ५८९ ॥

हिंसा सत्य अस्तेय ब्रह्मचर्य अपरिग्रहाः यमाः



(५६०. निष्ठा) ततो व्युत्थितचित्तैः शुभाश्रयभूतेऽस्मिन्निष्ठीयत इति "निष्ठा"। "आतश्चोपसर्गे" इत्यङ् । ५६० ॥

(५६१. शान्तिः) तत्र परमसमाधौ विस्मृतसर्वाधिकाराः शाम्यन्तीति "शान्तिः"। ५६१ ॥

[५६२ परायणम्] समाहितानां परममयनम् अव्यवहितप्रापिका परमा भक्तिरस्मादिति "परायणम्"। यथा "निर्ममः शान्तः" इत्युपक्रम्य "मद्भक्तिं लभते पराम्" इत्यन्तम्, "भक्त्या त्वनन्यया शक्यः" इति च ॥ ५६२ ॥ यमादि

(५६३. शुभाङ्गः) एवं स्वभक्तिभावनाशुभानि यमसमाध्यवधीन्यष्टावङ्गानि तस्मादिति "शुभाङ्गः"। स हि स्वयोगक्षेमवहः ॥ ५६३ ॥ प्रसन्न

(५६४. शान्तिदः) एवं निष्पन्नभक्तिभ्योऽप्रतिप्रसवनिर्मूलितभवोपप्लवां स्वसायुज्यरूपां शान्तिं ददातीति "शान्तिदः"। यथा 'विश्वस्यैकं परिवेष्टितारं ज्ञात्वा शिवं शान्तिमत्यन्तमेति' इति, "मत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम्" "तमीशानं वरदं देवमीड्यं निचाय्यात्मानं शान्तिमत्यन्तमेति" इत्यादि ।५६४।

(५६५. स्रष्टा) एवं मुमुक्षून् मुञ्चन् संसिसृक्षूंश्च प्रचितचिरन्तनकर्मवैनिक्र्योचितपरिकरैर्योजयन् सृजतीति "स्रष्टा"। "सृजिदृशोर्झल्यमकिति" इत्यम् ॥ ५६५ ॥

(५६६ कुमुदः) एवं सृष्टस्याऽऽब्रह्मस्तम्बस्योच्चावचशब्द

रतम्य अमन्तारण

स्पर्शादिभोगवती भूमिः कुः प्राकृतमण्डलम्, तत्र भोक्तॄन् भोजयन् मोदत इति "कुमुदः" । मूलविभुजादित्वात् कः । "अनीशश्चात्मा बध्यते भोक्तृभावात्" "ज्ञाज्ञौ द्वावजावीशनीशौ" इति ।५९६।

( ५९७ कुवलेशयः ) तत्र कौ कुत्सितं वा वलन्त आसंसारं भ्राम्यन्तीति कुवला जीवाः, ते स्वदेहेन्द्रियादावापेक्षिकाभिमानिका ईशाश्चेति कुवलेशाः, तांस्तथा नियच्छन् यातीति "कुवलेशयः" "आतोऽनुपसर्गे कः" ॥ ५९७ ॥

( ५९८. गोहितः ) गोः प्रकृतेः संसारबीजावापे क्षेत्रीभूताया हितो व्यवस्थापको "गोहितः" । "यो योनिं योनिमधितिष्ठत्येको यस्मिन्निदं सञ्च विचैति सर्वम् । तमीशानम्" "गौरनाद्यन्तवती सा जनित्री भूतभाविनी" "सूयते पुरुषार्थं च तेनैवाधिष्ठिता जगत्" इति ॥ ५९८ ॥

( ५९९. गोपतिः ) भोगभूमेः स्वर्गस्यापि पति "गोपतिः" ।

[ ६००. गोप्ता ] अस्य कर्मफलचक्रस्य रक्षिता "गोप्ता" ॥

इति श्रीहरितकुलतिलकश्रीवत्साङ्कमिश्रसूनोः, श्रीरङ्गनाथदिव्याज्ञालब्धश्रीपराशरभट्टापरनामधेयस्य, श्रीरङ्गनाथस्य कृतौ श्रीमद्विष्णुसहस्रनामविवरणे भगवद्गुणदर्पणे षष्ठं शतकं

॥ सम्पूर्णम् ॥

———

## ॥ अथ सप्तमशतकप्रारम्भः ॥

( ६०१. वृषभाक्षः ) तच्च धर्मद्वारेणेति "वृषभाक्षः" । फलवर्षी वृषभो धर्मः, सोऽक्षः संसारचक्राधारो यस्मात् ॥६०१॥

[ ६०२ वृषप्रियः ] एवं प्रवर्तकनिवर्तकधर्मौ प्रियाव-स्येति "वृषप्रियः" । तत्प्रियत्वेन हि द्वैधानां कर्मणां धर्मत्वम् । तत्प्रि-यत्वख्यापनमेव च विध्यर्थः । इदं च "फलमत उपपत्तेः" इत्यत्र न्यरूपि । तथा च द्रमिडाचार्याः "फलसंविभत्सया हि कर्मभि-रात्मानं पिप्रीषन्ति, स प्रीतोऽलं फलायेति हि शास्त्रमर्यादा" इति । अतः कर्मतत्संस्कारशक्त्यपूर्वभावनाविधिपक्षा उपेक्ष्याः ॥६०२॥

( ६०३. अनिवर्ती ) तत्र प्रवृत्तिकर्मरतान् धूमादिपितृ-याणपुनरावृत्त्या संसारान्न निवर्तयतीति "अनिवर्ती" । प्रह्लादि-त्वादिणिनिः । एवं कामीत्यादयः । अतो हि संसारानुच्छेदः । यथा "धूमो रात्रिस्तथा कृष्णष्षण्मासा दक्षिणायनम् । तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥" 'कृतात्ययेऽनुशयवान्" इत्यादौ चैवद्व्यधारि ॥ ६०३ ॥

( ६०४ निवृत्तात्मा ) ततो निवृत्ता निवृत्तिधर्माणोऽप्यात्मानोऽस्येति "निवृत्तात्मा" ॥ ६०४ ॥

( ६०५. संक्षेप्ता ) तत्र प्रवृत्तान् संकुचितस्वाभाविकज्ञानप्रभावान् कर्तुं शीलमस्येति "संक्षेप्ता"। यथा "यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप सर्वगा" इत्यादौ ॥ ६०५ ॥

( ६०६. क्षेमकृत् ) निवृत्तानां तत्संकोचनविमोचनं क्षेमं करोतीति "क्षेमकृत्" ॥ ६०६ ॥

[ ६०७. शिवः ] एवं सर्वबुभुक्षुमुमुक्षुशिवंकरत्वात् "शिवः"। यथा "संसारमोक्षस्थितिबन्धहेतुः" "पितृलोके राज्यमनुशास्ति देवः" "शिवः शिवानामशिवोऽशिवानाम्" इति ॥ ६०७ ॥

( ६०८. श्रीवत्सवक्षाः ) अथ शिवत्वोपपदकानि । ईशितव्याद्विभाजकलक्ष्मीवाल्लभ्यसौभाग्यचिन्हं श्रीवत्सोऽस्य वक्षसीति "श्रीवत्सवक्षाः"। "श्रीवत्सवक्षाः" इति ६०८ ॥

( ६०९. श्रीवासः ) "नित्यश्रीः" इत्यनेन यत् सूच्यते तदुच्यते "श्रीवासः" श्रियो नित्यस्वैरविहारकल्पद्रुमोद्यानम् ।६०९।

( ६१०. श्रीपतिः) "तुल्यशीलवयोवृत्ताम्" इतिवत् तस्याः समुचितो नित्यस्वयंवरपतिः "श्रीपतिः"। यथा "ह्रीश्च ते लक्ष्मीश्च पत्न्यौ" "अस्येशाना जगतो विष्णुपत्नी" ॥ ६१० ॥

( ६११. श्रीमतां वरः ) तस्याः सादरपूर्णनिर्वर्णननित्यपात्रं भगवान्, ब्रह्मादयस्तु तदान्तरीयककटाक्षवशीकरक्षणलक्ष्यम् । यथा "शुक्लमाल्याम्बरधरा स्नाता भूषणभूषिता । पश्यतां सर्वदेवानां ययौ वक्षःस्थलं हरेः ॥ तयाऽवलोकिता देवा हरिवक्षः-

स्थलस्थया । लक्ष्म्या मैत्रेय सहसा परां निर्वृतिमागता: ॥" इति ।
तस्मात् "श्रीमतां वरः" ॥ ६११ ॥

( ६१२. श्रीदः ) नित्यनूतननिर्व्याजप्रणयरसश्रियं तस्यै ददातीति "श्रीदः" तस्या जीवातुरित्यर्थः, तच्छ्रयणेन हि सा श्रीरित्युच्यते ।"नच सीता त्वया हीना न चाहमपि राघव । मुहूर्तमपि जीवावो जलान्मत्स्याविवोद्धृतौ" इति हि तस्याः प्रकृतिः । "विष्णोरेषाऽनपायिनी""अनन्या हि मया सीता भास्करेण प्रभा यथा" "अनन्या राघवेणाहम्" इति च ॥ ६१२ ॥

( ६१३. श्रीशः ) "श्रियः श्रीश्च भवेदग्र्या" इति तस्या अपि तथा श्वनिदानत्वात् "श्रीशः" । यद्वा श्रीरेवास्यापीशा सर्वावस्थाव्यवस्थापिकेति "श्रीशः" । "आदावात्मगुणत्वेन भोग्यरूपेण विग्रहे । आधारकस्वरूपेण दासीभावेन वा सदा ॥" "पुंप्रधानेश्वरेश्वरी" इति हि तस्या नाम ॥ ६१३ ॥

( ६१४. श्रीनिवासः ) दिव्यवल्ल्या इव कल्पद्रुमस्तस्या नित्योपघ्नः "श्रीनिवासः" ॥ ६१४ ॥

( ६१५. श्रीनिधिः ) रत्नमञ्जरीव मञ्जूषायां श्रीरस्मिन्निहितेति "श्रीनिधिः" ॥ ६१५ ॥

( ६१६. श्रीविभावनः ) सैवास्य विभावनी प्रख्योपाख्याहेतुरिति "श्रीविभावनः" "अप्रमेयं हि तत् तेजो यस्य सा जनकात्मजा" इतिवत् ॥ ६१६ ॥

( ६१७. श्रीधरः ) तां रत्नमिवार्चिपं पुष्पमिव सुरभि-

मिन्दुरिव चन्द्रिकाममृतमिव स्वादुतामौत्पत्तिकेन सम्बन्धेन धरतीति "श्रीधरः" 'न हि हातुमियं शक्या कीर्तिरात्मवतो यथा' इति ।

( ६१८ श्रीकरः ) तां परत्व इव व्यूहावतारादिष्वपि स्वानुरूपां करोतीति "श्रीकरः"। 'कृञो हेतुताच्छील्यानुलोम्येषु' इत्यानुलोम्ये टः । एवं तीर्थंकर इत्यादि । यथा 'देवत्वे देवदेहेयम्' इत्यादि ॥ ६१८ ॥

( ६१९. श्रेयःश्रीमान् ) श्रेयसे सर्वपुरुषार्थाय श्रयणीया श्रीः श्रेयःश्रीः, सास्य नित्ययोगिनीति "श्रेयः श्रीमान्"। यथा "प्रणिपातप्रसन्ना हि मैथिली जनकात्मजा" "अलमेषा परित्रातुं राक्षस्यो महतो भयात्" "शरीरारोग्यमैश्वर्यमरिपक्षक्षयस्सुखम्" "विमुक्तिफलदायिनी" 'यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम्' "श्रियं लोके देवजुष्टामुदाराम्" इति हि श्रियो निर्देशाः ॥ ६१९

( ६२० लोकत्रयाश्रयः ) सह तया जगन्मात्रा पितृवत्सर्वाश्रयो "लोकत्रयाश्रयः" । यथा "त्वं माता सर्वलोकानां देवदेवो हरिः पिता" इति ॥ ६२० ॥

( ६२१. स्वक्षः ) तत्सौन्दर्यसुधोदधिपायिपद्मदिव्याक्षरणः "स्वक्षः" ॥ ६२१ ॥ पारीण दिव्यक्ष

( ६२२. स्वङ्गः ) अस्या अपि स्पृहणीयदिव्यदेहः 'स्वङ्गः'।

( ६२३. शतानन्दः ) परस्परप्रणयप्रवृद्धपरिमितानन्दः "शतानन्दः" ॥ ६२३ ॥

( ६२४. नन्दिः ) एवं सर्वदा सर्वत्र सर्वथा चानया सम्पृध्यतीति "नन्दिः" । इन् । "सार्वधातुभ्यः" ॥ ६२४ ॥

( ६२५. ज्योतिर्गणेश्वरः ) उभयानुकूलोज्ज्वलशेषशेषाशनादिनित्यपरिचारकगणपरिचरणीयत्वाद् "ज्योतिर्गणेश्वरः" ज्योतिःशब्दो हि "मरीचीनां पदमिच्छन्ति वेधसः" "साध्याः सन्ति देवाः" इति सदाद्योतमानसूरिपरिकरवाचकः । एवं परत्वञ्च काष्ठा ॥६२५ ॥

( ६२६. विजितात्मा ) अथ सौशील्यपरमावधिर्गुह्यतमः । लक्ष्मीकमनीयत्वसम्पदुच्छृङ्खलमपि मनोऽस्य प्रणतैः प्रवणीकृतमिति "विजितात्मा" ॥ ६२६ ॥

[ ६२७ विधेयात्मा ) तेषां विधेयं हि "इहागच्छ" "इह तिष्ठ" "इहास्व"" इदं भुङ्क्ष्व" इति विधातुं च योग्यं स्वरूपमस्येति "विधेयात्मा" ॥६२६॥

( ६२८. सत्कीर्तिः ) ईदृशसौशील्यसत्त्वेनास्यातिमहती कीर्तिरिति "सत्कीर्तिः" एतावद्धि सुवचनम् , "यदस्य कीर्त्यते तदस्ति तावदिति,न तु यावदस्ति तावदिति तदधिकं वा"इति । यथा "सर्वेश्वरेश्वरः कृष्णः प्रोच्यते सर्वपण्डितैः । तथापि स्वल्पमेवोक्तं भूतार्थे कतमा स्तुतिः॥ "स्थाने हृषीकेश तव प्रकीर्त्या "इत्यादि च ॥६२८॥

( ६२९. छिन्नसंशयः ) एवं सौशील्यप्रथया स्वविषया सुज्ञानदुर्ज्ञानसुखाधदुस्साधसुलभदुर्लभत्वादिसंशयश्छिन्नोऽनेनेति

"छिन्नसंशयः" । यथा "तं ह देवमात्मबुद्धिप्रकाशम्" "त्वदन्यस्संशयस्यास्य छेत्ता न ह्युपपद्यते" इत्यादि ॥६२९॥

( ६३०. उदीर्णः ) कथम् ? चर्मचक्षुषामपि प्रत्यक्षयोग्यत्वेन "उदीर्णः" उन्मितः ॥ ६३० ॥

( ६३१. सर्वतश्चक्षुः ) अतोऽस्मदादिचक्षूंष्यपि तत्साक्षात्कारकर्माणीति "सर्वतश्चक्षुः" । अनश्छिन्नसंशयत्वं सिद्धम् । न हि स्पष्टदृष्टे संशयः ॥ ६३१ ॥

( ६३२ अनीशः ) तत्परेषु "अनीशः" तदधीनस्नानपरिकर्मगोप्त्र्यादिसर्वावस्थत्वात् ॥ ६३२ ॥

( ६३३. शाश्वतस्थिरः ) तथाऽसकृत्प्रत्यक्षीकृतसदातननानाबिम्बाकृतिरव्यवहितश्च तिष्ठतीति "शाश्वतस्थिरः" । तथा च श्रीसात्वते "बिम्बाकृत्यात्मना बिम्बे समागम्यावतिष्ठते" इति ।

( ६३४. भूशयः ) सन्निधियाच्ञया तद्दर्शितायतनादिभूमिषु स्वयंव्यक्तमानुषादिलक्षणासु तदनुग्रहसुखेन शेत इति "भूशयः" ॥

[ ६३५ भूषणः ) एवं विश्वजनीनेन शीलेन श्रियः पतिमात्मानं भूषयतीति "भूषणः" । "क्रुधमुण्डार्थेभ्यश्च" इति युच् । न हि श्रीमतामनाथगृहातिथित्वतत्संविभक्तभोज्यत्वसमानयोगक्षेमत्वादि दूषणम्, किंतु भूषणमेव ॥ ६३५ ॥

( ६३६. भूतिः ) सर्वबाह्यान्तरोपायरिक्तानां तेषामेव सर्वसमृद्धा विभूतिरिति "भूतिः" तेषां मुमुक्षुरभिमुख्य इव विभूतिभूत इत्यर्थः ॥ ६३६ ॥

निरञ्जनदासजी

( ६३७. अशोकः ) एवं कस्यचिद्व्यसनाथस्याह्वाना-त्तद्विषये 'अशोकः" "विशोको" वा । ६३७ ॥ सम्बन्धकेऽभावक

( ६३८. शोकनाशनः ) तेषां स्वसम्बन्धव्यतिरेक-शोकं नाशयतीति "शोकनाशनः" । यथा "श्रुतं ह्येव मे भगवद्दृशे-भ्यस्तरति शोकमात्मविदिति, सोऽहं भगवश्शोचामि, तं मा भगवान् शोकस्य पारं तारयतु" इति । शोचन्ति हि स्वरसानुभूतभगवद्-दर्शनक्लेशविदः ॥ ६३८ ॥

( ६३९. अर्चिष्मान् ) तत्र गूढप्रभावो हि तद्ब्रह्मान्त-रचक्षुरुन्नयनत्तमर्दिव्यतेजोऽतिशयः "अर्चिष्मान्" ॥ ६३९ ॥

( ६४०. अर्चितः ) सर्वमेतत्संभावयन्नुदाहरति "अर्चि-तः" अर्चाऽर्चावतारः, सास्य सञ्जातेति । स ह्यवतारो न परत्वव-द्विप्रकृष्टः, सुरनराद्यवतारवत् क्वचित् कदाचिद्वा, सदा सर्वेषु चै-त्रायतनेषु गृहेषु च प्रत्यक्षत्वात् । अस्य च तत्त्वगुणं भगवच्छा-स्त्रे बोधायनवैष्णवस्मृतिपुराणादिषु निषेव्यम् । वैष्णवधर्मेषु "सुरूपां प्रतिमां विष्णोः प्रसन्नवदनेक्षणाम् । कृत्वाऽऽत्मनः प्रीति करीं सुवर्णरजतादिभिः ॥ तामर्चयेत्तां प्रणमेत्तां यजेत्तां विचि-न्तयेत् । विशत्यपास्तदोषस्तु तामेव ब्रह्मरूपिणीम् ॥" इत्यादि ॥

( ६४१. कुम्भः ) तत्र तैः परिचितसजातीयसौन्दर्यादिना काम्यत इति "कुम्भः" । "कमेः कुम् च" इति भप्रत्ययः कुमा-देशश्च । कौ भूमावुत्तचैत्रायतनादिलक्षणायां ध्यानाराधनादीनां सीम्नि जन्ममरणमात्रेण वा स्वल्पसम्बन्धवत्यां यमभटादि-

भयापहमहाप्रभावत्वेन भातीति वा "कुम्भः" । पृषोदरादित्वात् साधुत्वम् । श्रीपौष्करभागे "आभासयति भूभागं परितस्तद्वदेव हि । स्वक्षेत्रः" इत्यादि । "यस्माद्देवालयोद्देशात् सुध्मातजलजस्य च । भवेच्छब्दानुवेधश्च तावत् क्षेत्रं तदुच्यते ॥" इत्यादौ सीमावधिविकल्पाश्च दर्शिताः । 'ऐहिकामुष्मिकी यत्र सिद्धिर्भवति देहिनाम् । अणिमाद्यष्टकोपेता स्वशक्त्या स्वात्मना तु वै । अध्वावनिषु सर्वासु नित्यं कुर्वन्ति सन्निधिम् । मुक्तये सर्वभूतानां विशेषेण तु वै भुवि ॥" तत्र क्षेत्रेषु "त्राहीत्युक्त्वा जगन्नाथं क्षिप्रं स्त्रीबालपूर्वकैः । ज्ञात्वा विमुक्तदेहं तु सह पुर्यष्टकेन तु ॥ महता तूर्यघोषेण कृत्वा रथवरे तु वै । जित्वाऽन्तकभटान् रौद्रान् यत्नात् क्षेत्रेशकिंकराः ॥ आनीय क्षेत्रनाथस्य अभितः स्थापयन्ति च । देव क्षेत्रे त्वदीयेऽस्य विमुक्तं पाञ्चभौतिकम् ॥ शरीरमस्यानाथस्य कुरु शम्भयथोचितम् । क्षेत्रनाथस्तु तद्वाक्यं समाकर्ण्य गणेरितम् ॥ करुणानुगतेनैव तन्निरीक्ष्य तु चक्षुषा ।" इत्यादिना न्यस्तदेहानां शुद्धितारतम्येन भगवता स्वयं किंकरादिद्वारा वा शोधितानां सद्यो वा पुण्यजन्मादिक्रमेण वा भगवत्प्राप्तिः प्रपञ्चिता ॥ ६४१ ॥

( ६४२. **विशुद्धात्मा** ) एवमशेषाश्रितेषु निरवशेषितसर्वस्वत्वाद् 'विशुद्धात्मा" ॥ ६४२ ॥

( ६४३. **विशोधनः** ) तत्र क्षेत्रेषु न्यस्तदेहान् स्वप्राप्त्यर्हान् विशोधयतीति "विशोधनः" ॥ ६४३ ॥

[ ६४४. **अनिरुद्धः** ] अथ क्षेत्रविशेषेषु पूर्वोक्तव्यूहद्विभवा-

नां स्थितिविशेषः । "जनार्दनाख्यया देवस्त्वनिरुद्धो जगत्प्रभुः । भूभागे वासुभारडाख्ये नित्यसन्निहितः स्थितः ॥" इति 'अनिरुद्धः' ।

[ ६४५. अप्रतिरथः ] स एव जनार्दनाख्यत्वादनिष्ट-जनार्दनेऽप्रतिपक्षत्वात् "अप्रतिरथः" ॥ ६४५ ॥

( ६४६. प्रद्युम्नः ) आत्मप्रद्योतनात् "प्रद्युम्नः" । "प्रद्योतयिता" इति मौलाः । "प्रद्युम्नः पुरुषोत्तमः । अधिष्ठाय स्थितः साक्षाद्भक्तानां सुगतिप्रदः" ॥ ६४५ ॥

( ६४७. अमितविक्रमः ) त्रैलोक्येऽप्यपर्यवसितविक्रमत्वात् त्रिविक्रमः "अमितविक्रमः" । "यामुनं जलमाश्रित्य देवदेवस्त्रिविक्रमः । स्थितः कमलसंभूतस्य नृणां च सुगतिप्रदः ॥" ६४६

[ ६४८. कालनेमिनिहा ] एतेषु क्षेत्रेषु स्थित्वा कलिकल्मषापहः "कालनेमिनिहा" । "अविद्याख्या च या नेमिः कालचक्रस्य दुर्धरा । सा मयीयं समाश्रित्य विग्रहं विधुनोति च ॥ ध्यायेत् तत्प्रसरघ्नं च देवम्" इति हि कालनेमिघ्नध्यानम् ॥ ६४७ ॥

( ६४८. शौरिः ) "स्वयम्भावर्तके देशे शौरिसंज्ञोऽच्युतः स्थितः" इति शौरिः ॥ शूरस्य वसुदेवस्यापत्यमिति ॥ ६४९ ॥

( ६५०. शूरः ) "धराधरे चित्रकूटे रक्षःक्षयकरो महान् । संस्थितश्च परो रामः पद्मपत्रायतेक्षणः" इति "शूरः" । 'शु गतौ' "शुसिचिमिनां दीर्घश्च" इति रक्प्रत्ययः ॥ ६५ ॥

( ६५१. शूरजनेश्वरः ) स एव विशेष्यते 'शूरजनेश्वरः'

( ६५२. त्रिलोकात्मा ) "मगधामण्डले विप्र महाबोधधराश्रितः। संस्थितो लोकनाथात्मा देवदेवो जनार्दनः॥" इति "त्रिलोकात्मा"। भक्तानुग्रहाय त्रीन् लोकान् मातत्येन गच्छतीति। "अत सातत्यगमने" "सातिभ्यां मनिन्मनिणौ" इति मनिन्प्रत्ययः॥ ६५२॥

[ ६५३. त्रिलोकेशः ] "शुभमासाद्य भूभागं प्राग्ज्योतिषपुरे तथा। देवं विश्वेश्वराख्यं तु स्थितमेत्य स्वगाचरात्॥" इति "त्रिलोकेशः"॥ ६५३॥

( ६५४. केशवः ) "केशवः कोशाह्वा लोके द्वैरूप्येण दिशौ स्थितः। मथुराख्ये महाक्षेत्रे वाराणस्यामपि द्विज॥" इति "केशवः"। "क इति ब्रह्मणो नाम ईशोऽहं सर्वदेहिनाम्। आवां तवाङ्गे संभूतौ तस्मात् केशवनामवान्॥" इति निरुक्तिः॥६५४॥

( ६५५. केशिहा ) "केशवं केशिहन्तारम्" इतिवत् स्वयमेव निर्वचनान्तरमाह "केशिहा" इति॥ ६५५॥

( ६५६. हरिः ) "गिरौ गोवर्धनाख्ये तु देवः सर्वेश्वरो हरिः। संस्थितः पूजितः स्थाने" इति "हरिः"। "इडोपहूतं गेहेषु हरे भागं क्रतुष्वहम्। वर्णश्च मे हरिः श्रेष्ठस्तस्माद्धरिरिति स्मृतः॥" इति॥ ६५६॥

( ६५७. कामदेवः ) "कामदेवस्तु भगवान् सर्वेषां सर्वकामदः। शङ्करालयमासाद्य संस्थितोऽप्सरसार्चितः॥" इति "कामदेवः"। दीव्यतिर्दानकर्मा॥ ६५७॥

( ६५८. कामपालः ) स एव दत्तानुपालनात् "कामपालः" ॥ ६५८ ॥

( ६५९. कामी ) प्रदेयातिशयात् "कामी" ॥ ६५९ ॥

[ ६६०. कान्तः ] स एव स्वयमेव कमनीयः "कान्तः" । अतो ह्यप्सरसार्चितः । एवमुत्तरत्रापि संज्ञासामर्थ्यादिना तत्तत्क्षेत्र-सम्बन्ध ऊहनीयः ॥ ६६०

[ ६६१. कृतागमः ] अथ शक्तीशावतारः । "नानामन्त्र-मयीं दिव्यां व्यञ्जयत्यमलात्मनाम्" इति "कृतागमः" । ६६१

( ६६२ अनिर्देश्यवपुः ) तत्तद्युगगुणानुग्राहकरूपवैचि-त्र्याद् "अनिर्देश्यवपुः" । "युगानुसारकान्तिश्च" इति ॥ ६६२ ॥

( ६६३ विष्णुः ) एवं व्याप्तिनियमनादिशक्तिद्वारा विश्व-व्याप्तेः "विष्णुः" । "सर्वशक्त्यात्मने" इति तन्मन्त्रवर्णे । आदि-त्यपुराणे "यस्माद्विष्टमिदं सर्वं तस्य शक्त्या महात्मनः । तस्मात् स प्रोच्यते विष्णुर्विशेर्धातोः प्रवेशनात् ॥" उद्योगे "विष्णुर्विक्रमणा-द्देवः" इति वा ॥ ६६३ ॥

( ६६४. वीरः ) "आज्ञाप्रतीक्षकेणैव गदाचक्रद्वयेन तु । प्रे-रितेन हिनस्त्याशु साधुसन्तापकारिणः ॥" इति "वीरः" ॥६६४॥

( ६६५. अनन्तः ) नास्य देशकालवस्तुतोऽवधयस्सन्तीति "अनन्तः" "अनन्तमूर्तये" इति तन्मन्त्रवर्णात्, "नास्त्यन्तो वि-स्तरस्य मे" "अथैतस्यैवान्तो नास्ति यद्ब्रह्म" "सत्यं ज्ञानमनन्तं

ब्रह्म" इति च। सदा सर्वत्र सर्वथा च प्रवृत्तस्वभाव इत्यर्थः। न च वस्तुपरिच्छेदाभावो वस्त्वभेदः, देशकालयोरतथात्वप्रसङ्गात्, न चैतदिष्टम् ॥ ६६५ ॥

[ ६६६. धनञ्जयः ] आनन्त्यं गुणविभूतिभ्यामप्युपपाद्यते 'धनञ्जयः" प्रेम्णोपार्जनलोभगूहनोपजीवनादियोग्यत्वाधिक्येन हेमरत्नादिकं धनमधःकरोतीति "संज्ञायां भृतृवृजिधारिसहितपिदमः" इति खच् ॥ ६६६ ॥

( ६६७. ब्रह्मण्यः ) इह हि बृहत्सु ब्रह्मशब्दं प्रयुञ्जते । तत्र तत्र तत्तत्फलज्ञानाभ्यामशेषभोगमोक्षभाक्त्वबृहत्त्वाज्जीवात्मापि ब्रह्मोच्यते "तज्ज्ञानं ब्रह्मसंज्ञितम्" "निर्दोषं हि समं ब्रह्म" इत्यादिषु । तद्भोग्यमव्यक्तं च, अनन्तभोगोपकरणपरिणामाद् "मम योनिर्महद्ब्रह्म" इत्यादिषु । ताभ्यां स्थितिभोगादिसर्वावस्थाहेतुत्वेन हितो "ब्रह्मण्यः" ॥ ६६७ ॥

[ ६६८. ब्रह्मकृद्ब्रह्मा ] तत्कार्यं महदहंकारादिप्रभृति च ब्रह्म, अस्तोकविस्तारत्वात् 'तस्मादेतद् ब्रह्म नामरूपमन्नं च जायते' इत्यादौ । तस्य कर्ता ब्रह्मा यस्य सर्वथा नियाम्यः,स 'ब्रह्मकृद्ब्रह्मा'।

[ ६६९. ब्रह्म ] एवं व्यक्ताव्यक्तपुरुषान् बृंहयति निरतिशयकल्याणगुणगणैः स्वरूपगुणविभवैः स्वयं च बृंहतीति अनापेक्षिकं वेदान्तवेद्यं परं ब्रह्म "ब्रह्म" । "बृंहेर्नोच" इति मनिन् प्रत्ययो नलोपश्च । "बृहत्त्वाद् बृंहणत्वाच्च ब्रह्मेति परिकीर्त्यते" इति ।

[ ६७०. ब्रह्मविवर्धनः ] सर्वस्यास्य निमित्तं तपउपलक्षितो धर्मोऽपि ब्रह्म "तपो ब्रह्म" इति श्रुतेः। तं विवर्धयतीति "ब्रह्मविवर्धनः" ॥ ६७० ॥

[ ६७१. ब्रह्मवित् ] तत्प्रतिपादको वेदोऽपि ब्रह्म "ब्रह्माध्येष्यमाणः" इत्यादेः, । "अनन्ता वै वेदाः"। तानप्यवधिना वेत्तीति "ब्रह्मवित्" । "अनादिनिधनं ब्रह्म न देवा नर्षयो विदुः। एकस्तद्वेद भगवान् धाता नारायणः स्वयम् ॥" ॥ ६७१ ॥

[ ६७२. ब्राह्मणः ] वेदव्यवस्थापनार्थं स्वयमत्रिगोत्रादौ दत्तात्रेयादिरूपेण ब्राह्मणो भवतीति "ब्राह्मणः" "ब्रह्म नयत्यणति" इति वा नैरुक्ताः ॥ ६७२ ॥

[ ६७३. ब्रह्मी ] सर्वमेतत् प्रमाणप्रमेयरूपं ब्रह्म स्वमिति "ब्रह्मी"। "सर्वब्रह्ममयो हरिः" इति ॥ ६७३ ॥

[ ६७४. ब्रह्मज्ञः ] वेदानर्थपर्यन्तं साक्षात्करोतीति "ब्रह्मज्ञः" "वेदविदेव चाहम्" इति ॥ ६७४ ॥ .

[ ६७५. ब्राह्मणप्रियः ] तदधिकारिणो ब्राह्मणाः प्रिया अस्येति "ब्राह्मणप्रियः"। यथा "घ्नन्तं शपन्तं परुषं वदन्तं यो ब्राह्मणं न प्रणमेद्यथाहम्" इत्यादि । "ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते। श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः।" इति, "यद् ब्राह्मणस्य मुखतः" "विप्रप्रसादादसुराञ्जयामि" किं पुनर्ब्राह्मणाः" इत्यादि। एवं बहुमुख्यानन्त्यमुक्तम्, यथा "महतो

महीयान्" "परात्परं यन्महतो महान्तम्" "महान्तं विभुमात्मानम्" "महतः परमो महान्" इत्यादि ॥ ६७५ ॥

[ ६७६. **महाक्रमः** ] अथैवमुत्सुकीकृतेषु वात्सल्यतोऽप्यानन्त्यम्। परमतुङ्गमात्मानं परमनिम्नभवपातालाज्जीवानारोहयतो महत्यारोहणसोपानपर्वानुपूर्व्यस्येति 'महाक्रमः'। यथा जननी स्तनन्धयमादौ स्तन्यं धापयति, अथ दुग्धम्, अथाहारम्, अथ भोगान् गमयति। एवमयं सुकृतिनमद्वेषास्तिक्याभिमुख्यानुवर्तनज्ञानभक्तिविस्रम्भक्रमेणैव प्रापयति, अभ्युत्थानार्थं छन्दानुवर्तनार्थं च। अन्यथा "बन्धायैव भवत्येषा अविद्या ह्यक्रमोज्झिता"। अतः खल्वाहुः "जन्मान्तरसहस्रेषु तपोध्यानसमाधिभिः। नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते ॥" इति, "बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते" "अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय" इत्यादि। ॥ ६७६ ॥

( ६७७. **महाकर्मा** ] कृमिकीटादिभावे दुर्जरपरोच्छिष्टसिक्थद्रप्समात्रं जन्तुं स्वमहाविभवानुभवाभियुक्तं करोतीत्यतिविस्मयनीयं महदस्य कर्मेति "महाकर्मा"॥६७७॥

[ ६७८ **महातेजाः** ] एवं तामसानामप्यनाद्यविद्यातमस्तस्करतेजस्त्वात् 'महातेजाः" ।६७८॥

[ ६७९ **महोरगः** ] कथमयमतिमहान् क्षोदीयसां नेदीयान्? विषयान्तरवत् तत्करणान्यनुप्रविश्य तत्रान्तःकरणानुप्रवेशात्

"महोरगः"। उरःप्रदर्शितं हृदयमुरः,यद्वारा तान् गच्छतीति 'उरसो ळोपश्च' इति डप्रत्ययः ॥६७९॥

**( ६८०. महाक्रतुः )** 'यो न वित्तैर्न विभवैर्न वासोभिर्न भूषणैः। तोष्यते हृदयेनैव कस्तमीशं न तोषयेत् ॥" इति। महत् सर्वसुकरमाराधनमस्येति "महाक्रतुः" समर्पणसंस्कारस्वादुकृतैरागमशास्त्रकारितसर्वव्यापारैराराध्यत्वात्। यथा 'यत्करोषि' इत्यादि।

**( ६८१. महायज्वा )** स्वयाजिनामन्ययाजिभ्योऽप्युत्कर्षात् "महायज्वा"। "सुयजोङ्वनिप्"। यथा "तेषामेकान्तिनः श्रेष्ठास्ते चैवानन्यदेवताः" इति ॥ ६८१ ॥

**( ६८२. महायज्ञः )** अभिगमनभोगमधुपर्कादिसाष्टाङ्गयागोऽप्यन्येभ्यस्तथेति "महायज्ञः"। यथा "सर्वेषां किल धर्माणामुत्तमो वैष्णवो विधिः" 'रक्षते भगवान् विष्णुर्भक्तानात्मशरीरवत्' "याः क्रियाः संप्रयुक्ताः स्युरेकान्तगतबुद्धिभिः। ताः सर्वाः शिरसा देवः प्रतिगृह्णाति वै स्वयम् ॥" इति "अहो ह्येकान्तिनः सर्वान् प्रीणाति भगवान् हरिः। विधिप्रयुक्तां पूजां च गृह्णाति शिरसा स्वयम् ॥" इति ॥ ६८२ ॥

**( ६८३. महाहविः )** "न तत्र पशुघातोऽभूत्" "आरण्यकपदोद्गीता भागास्तत्रानुवर्णिताः ॥" इत्याद्यहिंस्रसात्त्विकौपनिषदानि हवींष्यस्येति "महाहविः"। यथा "ब्रह्मार्पणं ब्रह्म हविः" इत्यादि, "ज्ञानयज्ञेन" "योऽहमस्मि स सन् यजे यस्यास्मि न.

तमन्तरेमि" "इदमहम्मामममृतयोनौ सूर्ये ज्योतिषि जुहोमि" "अहमेवाहं मां जुहोमि" इति प्रत्यगात्मह्विष्ट्वाद्वा । अथोपरिचरः परमैकान्ती "आत्मा राज्यं धनं चैव कलत्रं वाहनानि च । एतद्भगवते सर्वमिति तत्प्रेक्षितं सदा ॥" इति, अयं च "श्रेयान् द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परंतप" इति च । एवं मनःशरीरयोर्व्यापारसमाराध्यत्वम् ॥६८३॥

( ६८४. स्तव्यः ) अथ वाचः—"स्तव्यः" । स्तवमर्हतीति यत् । अनध्यारोप्यमहामङ्गलनित्यनिरवधिकनिरवद्यगुणो नामसहस्रव्यपदेश्यः पतिरेव स्तुतिमर्हतीति, न तु विपरीतगुणो देवतान्तरादिः । बार्हस्पत्यस्मृतौ "आदरेण यथा स्तौति धनवन्तं धनेच्छया । एवं चेद्विश्वकर्तारं को न मुच्येत बन्धनात् ॥" "इतीदं कीर्तनीयस्य" इत्यादि ॥ ६८४ ॥

( ६८५. स्तवप्रियः ) यथाकथंचिद्यथाकयाचिद्भाषया येन केनापि तेजस्करस्तिरस्कारी वा गुणसंकीर्तनाभिमानेन क्रियमाणस्तवः स्वविषयः प्रियतमोऽस्येति 'स्तवप्रियः' । अकण्टकमेतद् घण्टाकर्णादिवृत्ते ॥ ६८५ ॥

( ६८६. स्तोत्रम् ) स्वस्तोत्रमपि प्रसन्नेनानेन करणभूतेन निष्पाद्यत इति "स्तोत्रम्" । "दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे" इति ष्ट्रन् । इदं ध्रुवस्तवे द्रष्टव्यम् ॥६८६॥

( ६८७. स्तुतः ) सहस्रफणत्रयीमयादिभिस्सूरिभिरनन्तैर्ब्रह्मादिभिरस्मदादिभिश्चाविशेषेणानवधौ काले तत्तदभिलषित-

सिद्धये स्तुत इति "स्तुतः" । यथा "अशेषदेवेशनरेश्वरेश्वरैस्सदा स्तुतं यच्चरितं महाद्भुतम्" इति "धाता पुरस्ताद्यमुदाजहार शक्रः प्रविद्वान् प्रदिशश्चतस्रः" इति । अस्मदादिसर्वस्तुतत्वं "प्रदिशश्चतस्रः" इति ॥६८७॥

( ६८८. स्तोता ) स्वस्तोतारं स्तोतुं शीलमस्येति "स्तोता" । "यं स्तुवन् स्तव्यतामेति वन्दमानश्च वन्द्यताम्" इति । एतत् कैलासयात्रायाम् ॥ ६८८ ॥

( ६८९. रणप्रियः ) श्रीमद्रामायणमहाभारतप्रभृत्यभिप्रुताभीष्टदिव्यचेष्टितो "रणप्रियः" । सुहृत्प्रीणनरणादिचेष्टितो हि सः । यथा "ततः सकामं सुग्रीवमङ्गदं च महाबलम् । चकार राघवः प्रीतो हत्वा रावणमाहवे ।।" इति ॥ ६८९ ॥

( ६९०. पूर्णः ) बहुव्ययायाससत्कारविरहेऽपि स्तोत्रादिमात्रसाध्योऽयम् । कुतः ? यतः "पूर्णः" स्वत एवावाप्तसमस्तकामः ॥ ६९० ॥

( ६९१. पूरयिता ) किं तर्हि पूरणीयवत् स्तोत्रादिकमपेक्षेत ? तन्मनोरथपूरणशीलत्वात्, तदाह "पूरयिता" ॥ ६९१ ॥

( ६९२. पुण्यः ) पातकिनोऽपि स्वस्तुत्यर्हयन् पुनातीति "पुण्यः" । "पूतो यच्छुद्धश्च" ॥ ६९२ ॥

( ६९३. पुण्यकीर्तिः ) संकीर्तनमपि तथेति "पुण्यकीर्तिः" । "नामसंकीर्तनं पुंसां विलायनमनुत्तमम् । मैत्रेयाशेप-

पापानां धातूनामिव पावकः ॥" "अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः । पुमान् विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव ।" "कलौ संकीर्त्य केशवम्" इति । अत एव हि तत्परसूक्तादीनां पङ्क्तिपावनत्वश्रुतिः ॥ ६६३ ॥

[ ६६४. अनामयः ] एवं स्वसंस्पर्शदिव्यौषधेन "अनामयः" संसारमहाव्याधिविरोधी । भवो हि व्याधिः, भगवदनुभवशक्तिप्रतिबन्धकत्वात् । 'व्याधिभिः परिपूर्णोऽस्मि' इति तज्ज्ञवचनात् ।

[ ६६५. मनोजवः ] उक्तेषु शीघ्रकारित्वाद् 'मनोजवः" जगौ हि "क्षिप्रं भवति धर्मात्मा" इति, "सप्तजन्मकृतं पापं स्वल्पं वा यदि वा बहु । विष्णोरालयविन्यासप्रारम्भादेव नश्यति ॥" इति च ॥ ६६५ ॥

( ६६६. तीर्थकरः ) आत्मवत् स्मरणकीर्तनादिमात्रेण सर्वपावनानां गङ्गापुष्करादितीर्थानां हेतुत्वात् "तीर्थकरः" श्रुतिस्मृत्यादिसत्समयप्रवर्तनाद्वा, यथा "योगो ज्ञानं तथा सांख्यम्" इत्यादि, अगाधदुष्प्रवेशसिन्धोरिवात्मनः प्रवेशावतारसोपानकरणाद्वा ॥ ६६६ ॥

[ ६६७. वसुरेताः ] तत्र कृष्णावतारः, दिव्यज्योतिरुपादानहेतुत्वाद् "वसुरेताः" । वस्विति हि ज्योतिःपर्यायः । "उज्जहारात्मनः केशौ सितकृष्णौ महामुने" इति । "मम ते केशसंज्ञिताः" इति केशशब्दश्च व्याख्यातः ॥ ६६७ ॥

[ ६६८. वसुप्रदः ] परमनिधिमात्मानं देवकीवसुदेवाभ्यां

पुत्रत्वेन प्रददातीति "वसुप्रदः" ॥ ६९८ ॥

[ ६९९. वसुप्रदः ] ताभ्यां जगत्पितुः स्वस्य पितृस्वरूपं महत्तेजः प्रददातीति पुनश्च "वसुप्रदः" ॥६९९॥

[ ७००. वासुदेवः ] वसुदेवापत्यत्वाच्च "वासुदेवः" ७००

इति श्रीहरितकुलतिलकश्रीवत्साङ्कमिश्रसूनोः श्रीरङ्गराज-
दिव्याज्ञालब्धश्रीपराशरभट्टापरनामधेयस्य श्रीरङ्ग-
नाथस्य कृतौ श्रीमद्विष्णुसहस्रनामविवरणे
भगवद्गुणदर्पणे सप्तमशतकं समाप्तम् ॥

## ॥ अथाष्टमशतकप्रारम्भः ॥

[ ७०१. वसुः ] एतदवतारागमं क्षीरार्णवनिकेतनत्वमाह—"वसुः" तत्र वसतीति । यथा 'स लोकानां हितार्थाय क्षीरोदे वसति प्रभुः" ' एष नारायणः श्रीमान् क्षीरार्णवनिकेतनः । नागपर्यङ्कमुत्सृज्य ह्यागतो मथुरां पुरीम् ॥" इत्यादि ॥ ७०१ ॥

[ ७०२. वसुमनाः ] तत्र लक्ष्मीजन्मभूमौ वसतोऽपि वसौ वसुदेवे मनोऽस्येति "वसुमनाः" । देवदत्तो दत्तः सत्यभामा भामेतिवद् वसुर्वसुदेव इति महाभाष्यविदः ॥ ७०२ ॥

( ७०३. हविः ) देवकीवसुदेवसमीपवासरुचिरव्यपदप्रेमाकुलाभ्यां ताभ्यां कंसाद् गुप्तये नन्दयशोदाभ्यामादीयतेति "हविः" ॥ ७०३ ॥

[ ७०४. सद्गतिः ] जायमान एवासुरकृतापदपनोदनः सतां गतिः "सद्गतिः" । यथा "सतां सन्तोषमधिकं प्रशमं चण्डमारुतः" इति ॥ ७०४ ॥

[ ७०५. सत्कृतिः ] सत्यः सकलसंसारनिगलच्छेदिन्यो दधिनवनीतचोरणोलूखलबन्धरिङ्खणरासक्रीडादिमुग्धकृतयोऽस्येति "सत्कृतिः" । यथा "जन्म कर्म च मे दिव्यम्' इत्यादि ॥ ७०५ ॥

[ ७०६. सत्ता ] सत्तापि सतां स्वयमेवेति "सत्ता" न हि तद्व्यतिरेकेण किंचित् स्यात् "न तदस्ति विना यत् स्यान्मया" इति ॥ ७०६ ॥

[ ७०७. सद्भूतिः ] सतां पुत्रो मित्रं बन्धुर्दूतः सारथिरन्यश्च तद्भवन् "सद्भूतिः" ॥ ७०७ ॥

( ७०८. सत्परायणम् ) "कृष्णाश्रयाः कृष्णबलाः कृष्णनाथाश्च पाण्डवाः । कृष्णः परायणं तेषाम्"इति 'सत्परायणम्' । आह च 'मामेवैष्यसि' इति । पुलिङ्गत्वे सन्तोऽस्य परायणमिति "सत्परायणः" । यथा "मम प्राणा हि पाण्डवाः" इति । "पाण्डवानां भवान्नाथो भवन्तं च श्रिता वयम्" "ज्ञानी त्वात्मैव मे मतम्" इति ॥ ७०७ ॥

( ७०९. शूरसेनः ) यादवपाण्डवादयो भूभारावतरणसहाया अस्येति "शूरसेनः" ॥ ७०९ ॥

(७१०. यदुश्रेष्ठः) "अयं स कथ्यते प्राज्ञैः पुराणार्थविशारदैः । गोपालो यादवं वंशं मग्नमभ्युद्धरिष्यति ॥" इति "यदुश्रेष्ठः" ॥ ७१० ॥

(७११. सन्निवासः) मनुष्यधर्मशीलत्वेऽपि सतां सनकादीनां विश्रान्तिभूमिः "सन्निवासः"। यथा "सनन्दनाद्यैर्मुनिभिः सिद्धयोगैरकल्मषैः । संचिन्त्यमानं तत्रस्थैर्नासाग्रन्यस्तलोचनैः ॥" इति ॥ ७११ ॥

(७१२. सुयामुनः) शोभनं पावनं मनोहरं यमुनासम्बन्धि जलक्रीडापुष्पापचयरासक्रीडादि यस्येति "सुयामुनः" ॥७१२॥

(७१३. भूतावासः) कृष्णत्वे निन्हुतपरभावत्वाद् "वसन्ति त्वयि भूतानि भूतावासस्ततो हरे" इति 'भूतावासः' ॥७१३॥

(७१४. वासुदेवः) वसुदेवापत्यत्वे द्विपट्काध्यात्मं नियच्छतीति "वासुदेवः"। अत एव हि च जाग्रद्वय इवासुदेवो "माथुरायाद्भुतमायाय" इति मथुरावतारेण विशेष्यते ॥ ७१४ ॥

(७१५. सर्वासुनिलयः) एवं सर्वप्राणालम्भनं "सर्वासुनिलयः"। यथा "विना कृष्णेन गोव्रजाः" "असूर्यमिव सूर्येण निवातमिव वायुना । कृष्णेन समुपेतेन जहृषे भारतं पुरम् ॥" इत्यादि ॥ ७१५ ॥

(७१६. अनलः) तेषामेव सर्वोपकारत्वेऽपि 'अनलः' न किञ्चित् कृतमेषां मयेत्यविरामः, "ऋणं प्रवृद्धमिव मे हृदयान्नापसर्पति" इति । स्वभक्तविषयापराधं सोढुं नालमिति वा। "द्वौ तु मे वधकालेऽस्मिन्न हन्तव्यौ कथञ्चन । यश्चित्रकरं हन्यां पाण्डनानाञ्च दुर्हृदम् ।।" इति ॥ ७१६ ॥

(७१७. दर्पहा) गोवर्धनोद्धरणपरिजातापहरणबाणदोष्षण्डखण्डनादौ देवानां दर्पमात्रं हतवानिति 'दर्पहा' ॥७१७॥

(७१८. दर्पदः) शत्रुशमनदुर्जयद्वारवतीकरणशङ्खपद्मनिधिसुरतरुसुधर्माहरणादिना निर्भरीकृतेभ्यो यादवेभ्यो मधुपानादिदर्पं दत्तवानिति "दर्पदः" ॥ ७१८ ॥

[७१९. अदृप्तः] अथापि स्वयम् "अदृप्तः" । सभापर्वणि "एवंविधानि कर्माणि कृत्वा गरुडवाहनः । न विस्मयमुपागच्छत्पारमेष्ठ्येन तेजसा ।।" इति । यशोदानन्दलालनदृप्तो वा ।

[७२०. दुर्धरः] बाललीलादिप्रसङ्गेषु मत्तमातङ्गवत् ताभ्यां "दुर्धरः" दुर्वारचञ्चलचेष्टित इति । यथा माऽऽह "यदि शक्नोपि गच्छ त्वमतिचञ्चलचेष्टित" इति । दुरात्मनां वा 'दुर्धरः' । यथा "इमं हि पुण्डरीकाक्षं जिघृक्षन्त्यल्पमेधसः । पटेनाग्निं प्रज्वलितं यथा बालो यथाऽबलाः' ।।" इति, "दुर्ग्रहः पाणिना वायुर्दुःस्पर्शः पाणिना शशी । दुर्धरा पृथिवी मूर्ध्ना दुर्ग्रहः केशवो बलात् ।।" इत्यादि ॥ ७२० ॥

(७२१. अपराजितः) अथ भारतसंग्रामे निष्परिग्रहा अपि तत्परिग्रहात् पञ्चापि पाण्डवाः शतेनापि बहूपकरणारूढमूलैर्वा धार्तराष्ट्रैर्न पराजिता इति "अपराजितः" । यथाऽऽरण्यके कर्णायेन्द्रः "एकं हनिष्यसि रिपुं गर्जन्तं तं महामृधे । न तु यं प्रार्थयस्येकं रक्ष्यते स महात्मना ॥ यमाहुर्वेदविदुषो वाराहमजितं हरिम् । नारायणमचिन्त्यं च तेन कृष्णेन रक्ष्यते ॥" जयद्रथाय रुद्रः "अजय्यांश्चाप्यवध्यांश्च वारयिष्यसि तान् युधि । ऋतेऽर्जुनं महाबाहुं देवैरपि दुरासदम् ॥ यमाहुरमितं देवं शङ्खचक्रगदाधरम् । प्रधानस्सोऽस्त्रविदुषां तेन कृष्णेन रक्ष्यते ॥" 'यस्य त्वं पुरुषव्याघ्र सारथ्यमुपजग्मिवान् । ध्रुव इव जयस्तस्य न तस्यास्ति पराजयः ॥" भीष्मद्रोणादयश्च "शक्तोऽहं धनुषैकेन निहन्तुं सर्वपाण्डवान् । यद्येषां न भवेद् गोप्ता विष्णुः कारणपूरुषः ॥" "ध्रुवं वै ब्राह्मणे सत्यं ध्रुवा साधुषु सन्नतिः । श्रीध्रुवा चापि दक्षेषु ध्रुवो नारायणे जयः ॥" "अजय्यः शाश्वतो ध्रुवः" ,'अजितः खड्गधृक्" "यतः कृष्णस्ततो जयः" "यत्र योगेश्वरः कृष्णः" इत्यादि। आयुर्वेदे चरके औषधपेषणमन्त्रे '"यथाऽहं नाभिजानामि वासुदेवे पराजयम् । मातुश्च पाणिग्रहणं समुद्रस्य च शोषणम् । एतेन सत्यवाक्येन सिध्यतामगदो ह्ययम् ॥" वैतरणे च विषहरणमन्त्रं वदन् "रत्नाकर इवाक्षोभ्यो हिमवानिव चाचलः । जातवेदा इवाधृष्यो नारायण इवाजयः ॥" इति ॥ ७२१ ॥

[ ७२२. विश्वमूर्तिः ) कथं दुर्बलान् बलवन्तो न जयन्ति ?

सर्वस्य तच्छरीरत्वात्, नहि स्वशरीरं स्वानिष्टे चेष्टते ; इदमभिप्रेत्याह "विश्वमूर्तिः" । यथा "अहमात्मा गुडाकेश सर्वभूताशयस्थितः" इति ॥ ७२२ ॥

( ७२३. महामूर्तिः ) विश्वाश्रयमूर्तिः "महामूर्तिः" । यथा "इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम् । मम देहे गुडाकेश यच्चान्यद् द्रष्टुमिच्छसि ॥" इति ॥ ७२३ ॥

( ७२४. दीप्तमूर्तिः ) यत्किञ्चित् केनचिद् गुणेन दीप्तं तदस्य विशेषेण मूर्तिरिति "दीप्तमूर्तिः" । यथा "यद्यद्विभूतिमत् सत्त्वं श्रीमदूर्जितमेव वा" इत्यादि ॥ ७२४ ॥

( ७२५. अमूर्तिमान् ) अमूर्तयोऽव्यक्तपुरुषादयोऽप्येवमस्य स्वमिति "अमूर्तिमान्" । यथा "भूमिरापोऽनलो वायुः" "अपरेय मितस्त्वन्यां प्रकृतिम्" इति, "यस्याव्यक्तं शरीरम्" "यस्यात्मा शरीरम्" इति च । पूर्वोत्तरमूर्तिमत्त्वोक्तिविरोधाद् अमूर्तिरित्येतावता निषेधसिद्धौ मतुब्वैयर्थ्याच्च नैष मूर्तिनिषेधः ॥७२५

( ७२६. अनेकमूर्तिः ) कृष्णत्वेऽप्यजहद्वासुदेवादिचतुर्मूर्तित्वात् "षोडश स्त्रीसहस्राणि शतमेकं ततोऽधिकम् । तावन्ति चक्रे रूपाणि भगवान् देवकीसुतः ॥" इति चासाधारणानेकमूर्तित्वाद् "अनेकमूर्तिः" ॥ ७२६ ॥

( ७२७. अव्यक्तः ) इदं मनुष्यत्वेन गूहत

इति "अव्यक्तः" । यथा "नाहं प्रकाशस्सर्वस्य" "नाहं वेदैर्न तपसा' इत्यादि ॥ ७२७ ॥

( ७२८. शतमूर्तिः ) अथ दिदृक्षवेऽर्जुनाय व्यक्तैश्वरूप्यः "शतमूर्तिः" "पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः" इति ॥ ७२८ ॥

( ७२९. शताननः ) "शताननः" । तत्रैव चार्जुनः "अनेकवक्त्रनयनम्" इति ॥ ७२९ ॥

[ ७३०. एकः ] उक्ते महिम्नि सजातीयसंख्येयासंभवादद्वैतं गच्छतीति "एकः" । "इण् गतौ" इत्यस्माद् "इण्भीका" इत्यादिना कन्प्रत्ययः । एकोपाधिपतितान् हि संचक्षते, यथा "द्वौ ब्राह्मणौ त्रयः क्षत्रियाः" इति । नहि भगवतः कश्चित् केनचिदुपाधिना तुल्यकक्षः । यथा "एक इन्द्राजा जगतो बभूव" "न तस्य प्रतिमास्ति" इति च ॥ ७३० ॥

( ७३१. नैकः ) अत इदमैक्यं न सर्वनिह्नवविवर्तसंकरणपरिणामादिनिमित्तम्, किं तु विभूतितया विजातीयेन सर्वेण द्वितीयवानेवेति "नैकः" । यथा "नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तप" इति ॥ ७३१ ॥

[ ७३२. सः ] एष्वाकुमारमखिलप्रसिद्धया स्वविषयं ज्ञानं स्यतीति "सः" । स्यतेः "शमिमुषिस्यति" इत्यादिना डः ॥ ७३२ ॥

[ ७३३. वः ] यथाप्रसिद्धि सर्ववासित्वाद् "वः" वसतेर्डः। "वसन्ति तत्र भूतानि भूतात्मन्यखिलात्मनि। स च भूतेष्वशेषेषु वकारार्थस्ततो मुने॥" इति॥ ७३३॥

[ ७३४. कः ] मळीमसेषु वसन्नपि कनतीति "कः"। कनतेर्डः॥ ७३४॥

( ७३५. किम् ) तत्तात्सर्वोऽभिरतबुभुत्सूनां निरुपाधिकप्रष्टव्यत्वात् "किम्"। "प्रच्छ ज्ञीप्सायाम्" इत्यस्मात् "प्रच्छिदंसि" इत्यादिनेम् प्रत्ययः कादेशश्च। "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" इति॥ ७३५॥

[ ७३६. यत् ] तेषां रक्षायै यतत इति "यत्"। "यती प्रयत्ने" क्विप्। यथा "कृष्ण कृष्णेति कृष्णेति यो मां स्मरति नित्यशः। जलं भित्त्वा यथा पद्मं नरकादुद्धराम्यहम्" इति "अहं स्मरामि मद्भक्तं नयामि परमां गतिम्" इति च॥ ७३६॥

[ ७३७. तत् ] तेषां स्वज्ञानभक्तिं तनोतीति "तत्" "गमादीनाम्" इति क्विप् नकारलोपस्तुगागमश्च। अतो हि "तत् सवितुर्वरेण्यम्" "ओं तत् सदिति निर्देशः" इत्यादि॥ ७३७॥

( ७३८. पदमनुत्तमम् ) तेषां परमप्राप्यत्वाद् "पदमनुत्तमम्"। पद्यते प्राप्यत इति पदम्॥ ७३८॥

[ ७३९. लोकबन्धुः ) एवमविशेषेणाशेषानुग्र-हेऽवर्जनीयं बान्धवं निबन्धनमाह 'लोकबन्धुः' लोकानां स्वजनः । "बन्ध बन्धने" "शृस्वृस्निहि" इत्यादिनोप्रत्ययः । यथा "माता पिता भ्राता निवासः शरणं सुहृद् गतिर्नारायणः" "पिताहमस्य जगतः" इत्यादि ॥ ७३९ ॥

( ७४०. लोकनाथः ) तन्मूलमसाधारणं स्वा-भाविकं च सम्बन्धमाह "लोकनाथः" इति स्वामी ॥ ७४० ॥

( ७४१. माधवः ) बान्धवविशेषमाह—मातापितृत्वं श्रिया सहास्य सूचयन्ति "माधवः" मधुकुलोद्भवत्वाद्वा "माधवः" । 'मौनाद् ध्यानाच्च योगाच्च विद्धि भारत माधवम्" इति वा ।

( ७४२. भक्तवत्सलः ) उक्तस्वाम्यबान्धवोत्सुकेषु भक्तेषु विशेषं भाषते—"भक्तवत्सलः" तल्लाभसंभ्रमविस्मृतान्यकामः ॥

[ ७४३. सुवर्णवर्णः ] पक्वगुणवत् कनकनिकषनिर्दोषोज्ज्वलदिव्यवर्णः "सुवर्णवर्णः" । यथा "यदा पश्यः पश्यते रुक्मवर्णम्" "रुक्माभं स्वप्नधीगम्यम्" "आदित्यवर्णम्" "हिरण्मयः पुरुषः सर्व एव सुवर्णः" इत्यादि ॥ ७४३ ॥

( ७४४. हेमाङ्गः ) वर्णाधिष्ठानं च नित्य दिव्य स्वर्णमयमङ्गमस्येति "हेमाङ्गः" "हिरण्मयः पुरुषो दृश्यते" इति ७४४॥

[ ७४५. वराङ्गः ] तदेतदौपनिषदं दैवक्या त्रियमाण-मर्श्रीनिन्हुतदिव्यचिन्हमाचिष्कृतमिति "वराङ्गः" । यथा "फुल्लेन्दीवरपत्राभं चतुर्बाहुं निरीक्ष्य तम् । श्रीवत्सवक्षसं जातं तुष्टावानकदुन्दुभिः ॥" इति ॥ ७४५ ॥

( ७४६. चन्दनाङ्गदी ) चन्दनानि आह्लादनानि—अनन्याभरणमप्यङ्गं स्वसंवलिततयोन्मील्य ददतीति वा केयूरोपलक्षणेन वा दिव्यभूषणान्यङ्गदादीनि भूयिष्ठान्यस्येति 'चन्दनाङ्गदी' भूमनीनिप्रत्ययः ॥ ७४६ ॥

[७४७. वीरहा ] अतिसुभस्तनन्धयोऽपि पूतनाशकटार्जुनादीन्, मुरादीन वञ्चकान् समूलघातं हन्तीति "वीरहा" ७४७

[ ७४८. विषमः ] एवमृजुकुटिलाशयेषु क्षेमंकरभयंकरविषमवृत्तत्वाद् "विषमः" ॥ ४४८ ॥

( ७४६. शून्यः ) मशुष्यत्वेऽप्यशेषदोषैर्विवर्जितः "शून्यः" । "शुन गतौ" ण्यत् ॥ ७४६ ॥

( ७५०. घृताशीः ) "घृ सेचने" घृतं सेचनं स्वगुणैर्जगदाप्यायनम्, तत्र वा गोपगृहगव्ये वाऽऽशास्तिरस्येति "घृताशीः" ।

( ७५१. अचलः ) दुर्योधनादिभिर्दुरात्मभिश्चेयः "अचलः" ॥ ७५१ ॥

अवधीत तिरस्कृता



(७५२. चलः) प्रणतपाण्डवादेः प्रयोजनाय सत्यसमयादेश्चलतीति "चलः"। स एवधीरितानायुधस्पर्शसमयः समुद्धृतचक्रो भीष्ममाचक्राम। यथा "तमात्तचक्रं प्रणदन्तमुच्चैः क्रुद्धं महेन्द्रावरजं समीक्ष्य। सर्वाणि भूतानि भृशं विनेदुः क्षयं कुरूणामिति चिन्तयित्वा॥ स वासुदेवः प्रगृहीतचक्रः संवर्तयिष्यन्निव जीवलोकम्। अभ्युत्पतन् लोकगुरुर्बभासे भूतानि धक्ष्यन्निव धूमकेतुः॥" इत्यादि ॥ ७५२ ॥

(७५३. अमानी) भक्तेष्वनहंयुः "अमानी"। यतो हि दूत्यादावनपत्रपिष्णुरधिचकार ॥ ७५३ ॥

(७५४. मानदः) अर्जुनभीमसेनयुधिष्ठिरादिभ्यो रथित्वाधिराज्यबहुमानं दत्तवान् "मानदः" ॥ ७५४ ॥

(७५५. मान्यः) तदीयत्वेन सम्मन्तव्यो "मान्यः"। तथा ह्ययमात्मानं बहुमंस्त "न सारथेः सात्त्वतकौरवाणां क्रुद्धस्य मुच्येत रणेऽद्य कश्चित्" इति ॥ ७५५ ॥

(७५६. लोकस्वामी) क एवं कर्मकरः ? "लोकस्वामी" ॥ ७५६ ॥

(७५७. त्रिलोकधृत्) एवमतितुङ्गः कथं नीचैर्भवति ? "त्रिलोकधृत्" अशेषाणामपि धारणपोषणयोर्भारकत्वादिति। यथा "विष्टभ्याहमिदं कृत्स्नम्" इत्यादि ॥ ७५७ ॥

**( ७५८. सुमेधाः )** आराधकसुसाधुबुद्धिः "सुमेधाः"। "नित्यमसिच् प्रजामेधयोः" इति समासान्तोऽसिच् ॥ ७५८ ॥

**( ७५६. मेधजः )** अतो मेघे देवकीपुत्रीयव्रतरूपे यज्ञे जात इति "मेधजः"। स हि तामाह "स्तुतोऽहं यत् त्वया पूर्वं पुत्रार्थिन्या वदद्य ते। सफलं देवि संजातं जातोऽहं यत् तवोदरात् ॥" "सम्यगाराधितेनोक्तं यत् प्रसन्नेन ते शुभे। तत् कृतं सकलं देवि" इति ॥ ७५६ ॥

**( ७६०. धन्यः )** तज्जन्मधनलाभाद् "धन्यः"। "धनगणं लब्धा" इति यत् ॥ ७६० ॥

**( ७६१. सत्यमेधाः )** "जातोऽहं यत् तवोदरात्" "अहं वो बान्धवो जातः" इति बल्लववसुदेवादिसाजात्याभिमानिनी मेधा सत्याऽस्य न नटनमात्रमिति "सत्यमेधाः"। स हि बल्लवानाह "यदि वोऽस्ति मयि प्रीतिः श्लाघ्योऽहं भवतां यदि। तदात्मबुद्धिसदृशी बुद्धिर्वः क्रियतां मयि ॥" इति, "नाहं देवो न गन्धर्वो न यक्षो न च दानवः। अहं वो बान्धवो जातो न वश्चिन्त्यमतोऽन्यथा ॥" इत्यादि ॥ ७६१ ॥

**( ७६२. धराधरः )** "तदेतदखिलं गोष्ठं त्रातव्यमधुना मया। इममद्रिमहं धैर्यादुत्पाट्याशु शिलाघनम्। धारयिष्यामि गोष्ठस्य पृथुच्छत्रमिवापरम् ॥" इति गोवर्धनं धरमादधद् "धराधरः" ॥ ७६२ ॥

[ ७६३. तेजोवृषः ] एवं सुहृत्पालनलक्षणं तेजो वर्षतीति "तेजोवृषः" ॥ ७६३ ॥

( ७६४. द्युतिधरः ) तेन तादृश्येऽपीन्द्राभिभावुकामतिमानुषीं द्युतिं धृतवान् "द्युतिधरः" ॥ ७६४ ॥

( ७६५. सर्वशस्त्रभृतां वरः ) नरकजरासन्धादिसमरेषु "सर्वशस्त्रभृतां वरः" । यथा "मनुष्यधर्मलीलस्य लीला सा जगतः पतेः । अस्त्राण्यनेकरूपाणि यदरातिषु मुञ्चति ॥" इति ॥

( ७६६. प्रग्रहः ) अर्जुनः सारथिनानेन रश्मिभिरिव प्रगृह्यत इति "प्रग्रहः" ॥ ७६६ ॥

( ७६७. निग्रहः ) अर्जुनपौरुषनिरपेक्षेण सारथ्यवैचित्र्येण निगृह्यन्ते शत्रव इति "निग्रहः" ॥ ७६७ ॥

( ७६८. व्यग्रः ) अर्जुनवैरिनिग्रहे युद्धकर्माण्यग्रहमानो "व्यग्रः" । "अग कुटिलायां गतौ" "ऋज्रेन्द्राग्र" इत्यादिना रन् प्रत्ययो निपातितः । यथा भीष्माभिक्रमणे "ये यान्ति यान्त्येव शिनिप्रवीर येऽवस्थिता सत्वरं तेऽपि यान्तु । भीष्मं रथात् पश्यत पात्यमानं द्रोणं च संख्ये सगणं मयाऽद्य ॥" इत्येवमुक्त्वा "रथादवप्लुत्य विसृज्य वाहान्" इत्यादि ॥ ७६८ ॥

( ७६९. नैकशृङ्गः ) बुद्धियोगसारथ्यानायुधग्रहणव्याजः प्राप्तकाले तद्ग्रहणमिति बहुवैरिबाधकमायेति "नैकशृङ्गः" ।

"शॄ हिंसायाम्" 'शृणातेर्ह्रस्वश्च' इति गन्प्रत्ययः किन्नुडागमश्च ।

( ७७० गदाग्रजः ) गदनाम्नोऽग्रजो "गदाग्रजः" ७७०

( ७७१. चतुर्मूर्तिः ) विभवेऽपि तन्मूलव्यूहं प्रत्यभिज्ञापयति "चतुर्मूर्तिः" । बलभद्रवासुदेवप्रद्युम्नानिरुद्धाभिख्याश्चतस्रो मूर्तयो यदुकुलेऽप्यस्येति ॥ ७७१ ॥

( ७७२. चतुर्बाहुः ) व्यूहमूलेन निरुपाधिकपररूपेण देवक्यामवततारेति "चतुर्बाहुः" । सा चैनमाह "उपसंहर सर्वात्मन् रूपमेतच्चतुर्भुजम् । जानातु माऽवतारं ते कंसोऽयं दितिजन्मजः ॥" इति ॥ ७७२ ॥

( ७७३. चतुर्व्यूहः ) अत्रापि तथैव समस्तव्यूहरूपानुप्रवेशावस्थत्वात् "चतुर्व्यूहः" ॥ ७७३ ॥

( ७७४. चतुर्गतिः ) उपासकाभियोगतारतम्यकृतक्रमाच्चतस्रः प्राप्तयोऽस्मिन्निति "चतुर्गतिः" ॥ ७७४ ॥

( ७७५. चतुरात्मा ) तेनैवाधिकारितारतम्येन प्रादुष्कृतस्थूलसूक्ष्मजाग्रदादिचातुरात्म्यप्रकटीकरणाच्चत्वार आत्मानोऽस्येति "चतुरात्मा" ॥ ७७५ ॥

( ७७६. चतुर्भावः ) एवं षोडशात्मनि चतुर्व्यूहेऽधिकृत-

चतुर्व्यूह प्रभवा: भावाभावन



प्रयोजनाभिव्यञ्जनानि यस्य

जगद्व्यापारशास्त्रदानादिस्थूलसूक्ष्मव्यूहप्रयोजनपुञ्जव्यञ्जनात् "चतुर्भाव:" । भावो भावनाऽभिव्यञ्जनम् ॥ ७७६ ॥

( ७७७. चतुर्वेदवित् ) व्यूहविभवयोर्विभावितमिदं महावैभवं महाविभूतिमहार्णवलवमात्रं परापरविभवकोविदानां चतुर्वेदविदां प्रतिभातीति "चतुर्वेदवित्" ॥७७७॥

( ७७८. एकपात् ) "एकपात्" । अतो हि व एवमाहुः "अंशावतारो ब्रह्मर्षे योऽयं यदुकुलोद्भवः" "अशांशेनावतीर्णोर्व्याम्" "विष्णोर्भावममीमांस्यम्" "साक्षाद्विष्णोश्चतुर्भागः" इति ॥७७८

[ ७७९. समावर्तः ] एतादृशं सदा सर्वत्र सर्वथा समन्ताद्व्यूहवैभवावर्तनमस्येति "समावर्तः" ॥७७९॥

[ ७८०. निवृत्तात्मा ] कृपालुतयैव जगत्संवलितोऽधिकारः, स्वतस्तु तदसम्मतमनाः "निवृत्तात्मा" । यथा "अवाप्यनादरः" इति ॥ ७८० ॥

[ ७८१. दुर्जयः ] सुरनरादिशक्त्याऽशक्यो वशीकर्तुं "यन्न दर्शितवानेष कस्तदन्वेष्टुमर्हति" इति "दुर्जयः" ॥ ७८१ ॥

( ७८२. दुरतिक्रमः ] अथ सर्वस्य पादमूलमतिक्रम्य न गत्यन्तरमिति 'दुरतिक्रमः' श्रूयते हि "यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः । तदा देवमविज्ञाय दुःखस्यान्तं निगच्छति ॥" इति, "वासुदेवमनाराध्य को मोक्षं समवाप्नुयात्" "न हि विष्णु-

मृते काचिद् गतिरन्या विधीयते । इत्येवं सततं वेदा गायन्ते नात्र संशयः ॥" इति ॥ ७८२ ॥

( ७८३. दुर्लभः ) 'तस्याप्यनन्यमनस्कस्य सुलभो न जनार्दनः' 'अप्राप्यः केशवो राजन्निन्द्रियैरजितैर्नृणाम्" इति "दुर्लभः" ॥७८३॥

( ७८४. दुर्गमः ) नेत्रदुर्बलानामिव मध्याह्नभास्करोऽप्र-धृष्यतेजा दण्डापूपिकया "दुर्गमः" ॥ ७८४ ॥

( ७८५. दुर्गः ) अविद्यायावरणैर्दुष्प्रवेशश्च "दुर्गः" । "सु दुरोरधिकरणे" इति डः ॥ ७८५ ॥

( ७८६. दुरावासः ) एवं च दूरे दुष्करस्तत्पदावास इति "दुरावासः" ॥ ७८६ ॥

( ७८७. दुरारिहा ) इदं दौर्लभ्यमप्रपित्सुपापविषये प्रय-च्छन् बुद्धावतारं नियच्छति "दुरारिहा" दुर्मार्गगामिनो दुरारयः, तान् त्रयीमार्गत्याजनादिभिस्तैस्तैरुपायैर्हतवानिति । यथा वैष्णवे "मायामोहेन ते दैत्याः प्रकारैर्बहुभिस्तदा । व्युत्थापिता यथा नैषां त्रयीं कश्चिदरोचयत् । हताश्च तेऽसुरा देवैः सन्मार्गपरिपन्थिनः ॥" इति ॥ ७८७ ॥

( ७८८. शुभाङ्गः ) कथंताननुप्रविष्टः ? "शुभाङ्गः" । अयं परमप्रत्ययित इत्यसुरविप्रलम्भकमायामोहनविग्रहः ॥ ७८८ ॥

अनपेत रहित



( ७८९. लोकसारङ्गः ) कीदृग्विप्रलम्भः ? "लोकसारङ्गः" लोके यत् सारं न्यायादनपेतं भोगमोक्षवर्त्म तद् गच्छतीति । "गमेः सुप्युपसंख्यानम्" " खच्च वा डिद्वक्तव्यः" इति । स खल्वाह "कुरुध्वं मम वाक्यानि यदि मुक्तिमभीप्सथ" इत्यादि ॥ ७८९ ॥

( ७९०. सुतन्तुः ) शोभनो न प्रतिलङ्घ्यस्तद्ग्रहणवागुरातन्तुः कृत्रिमशान्तिभावनादिरूपोऽस्येति "सुतन्तुः" ॥ ७९० ॥

[ ७९१. तन्तुवर्धनः ] एवं पापरुचिभिरंशुभिरिव संसारतन्तुं सन्तनोतीति "तन्तुवर्धनः" । यथा "तानहं द्विषतः क्रूरान् संसारेषु नराधमान्" इत्यादि "त्रयीमार्गसमुत्सर्गं मायामोहेन तेऽसुराः । कारितास्तन्मया ह्यासंस्तथान्ये तत्प्रचोदिताः । तैरप्यन्येपरे तैश्च तैरप्यन्ये परे च तैः ॥" इति ॥ ७९१ ॥

( ७९२. इन्द्रकर्मा ) "तमूचुस्सकला देवाः प्रणिपातपुरस्सरम् । प्रसीद नाथ दैत्येभ्यस्त्राहीति शरणार्थिनः ॥" इति शरणागतेन्द्राद्यर्थं एवंविधव्यापारत्वाद् "इन्द्रकर्मा" ॥ ७९२ ॥

( ७९३. महाकर्मा ) एवं प्रपन्नपरिपालनार्थत्वाद् दुराचारदण्डनार्थत्वाच्च खलु परमकारुणिकस्यैव विप्रलम्भसंभवः, एवं न्यायवृत्तत्वाद् "महाकर्मा" ॥ ७९३ ॥

( ७९४. कृतकर्मा ) तद्विप्रलिप्सया स्वयमप्यनुष्ठिततदाचारः "कृतकर्मा" ॥ ७९४ ॥

[ ७९५. कृतागमः ] तत्स्थेम्ने प्रणीतबुद्धार्हतादिसामयिकागमः "कृतागमः" ॥ ७९५ ॥

( ७९६. उद्भवः ) मुक्त्युपदेशनाट्तिकेन भवादुद्गत इव "उद्भवः" ॥ ७९६ ॥

[ ७९७. सुन्दरः ] तद्दृष्टिमनोहरः "सुन्दरः" ॥ ७९७ ॥

[ ७९८. सुन्दः ] तेनासुरमनांसि सुष्ठून्त्तीति "सुन्दः" पृषोदरादिः ॥ ७९८ ॥

( ७९९. रत्ननाभः ) पाण्डित्यविडम्बनमृष्टोदरव्यक्तरत्ननाभी "रत्ननाभः" ॥ ७९९ ॥

[ ८००. सुलोचनः ] तथा हृदयालुचोरलोचनः "सुलोचनः"। यथा "ततो दिगम्बरो मुण्डः" "पुनश्च रक्ताम्बरधृक् मायामोहोऽजितेक्षणः" इति ॥ ८०० ॥

इति श्रीहरितकुलतिलकश्रीवत्साङ्कमिश्रसूनोः, श्रीरङ्गनाथदिव्याज्ञालब्धश्रीपराशरभट्टापरनामधेयस्य,
श्रीरङ्गनाथस्य कृतौ श्रीमद्विष्णुसहस्रनामविवरणे भगवद्गुणदर्पणे
अष्टमं शतकं सम्पूर्णम् ॥

---

## ॥ अथ नवमशतकप्रारम्भः ॥

(८०१ अर्कः) अहो महात्माऽतिधार्मिक इति तैः स्तुतः "अर्कः"। "अर्क स्तुतौ" ॥ ८०१ ॥

[८०२. वाजसनिः] नास्तिक्यवादेनैहिकमन्नादिकमेव संभजतीति "वाजसनिः"। "षन षण संभक्तौ" इन्। क्षपणकव्रतं हीदं यत् प्रातः प्रातर्दध्योदनकवलान् गृह्णत इति ॥ ८०२ ॥

[८०३. शृङ्गी] शृङ्गमिवाहिंसाविडम्बनपिञ्छिकास्य करेऽस्तीति "शृङ्गी" यथा "बर्हिपत्रधरः" इति ॥ ८०३ ॥

[८०४. जयन्तः] आस्तिक्यवादिनः संविदात्मत्वप्रपञ्चमिथ्यात्वमिथ्यावादैर्जितवानिति "जयन्तः"। "जि जये" 'तॄभूवहिवसिभासिसाधिगण्डिमण्डिजिनन्दिभ्यश्च' इति झच्प्रत्ययः ८०४।

[८०५. सर्वविज्जयी] कथं चैतान् प्रमाणविरुद्धं प्रत्याययति ! "सर्वविज्जयी"। सर्वज्ञा अपि हि जय्या अस्येति ८०५

[८०६. सुवर्णविन्दुः] सर्वशक्तित्वात्पटुतरपदकवर्णैरास्तिकतापलापात् "सुवर्णविन्दुः"। "विदि अपलापे" ॥ ८०६ ॥

[८०७. अक्षोभ्यः] गम्भीराशयत्वेनाविकार्यः "अक्षोभ्यः" ॥ ८०७ ॥

(८०८. सर्ववागीश्वरेश्वरः) अतो वादित्ववाग्मित्व-

र्थयोः पारं गतः । यथा "उत्तरोत्तरयुक्तौ च वक्ता वाचस्पतिर्यथा" इति ॥ ८०८ ॥

( ८०९. महाह्रदः ) यत्र पापकर्माणोऽपुनरुत्थानं निमज्जन्ति "क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु" इति, यत्र च पुण्यकृतो गाहं गाहं तृप्यन्ति, सः "महाह्रदः"। "ह्राद अव्यक्ते शब्दे"। ह्रादत इति ह्रदः। पृषोदरादित्वाद् ह्रस्वत्वम् ॥ ८०९ ॥

( ८१०. महागर्तः ) एवं पापकुदृष्टिविनिविष्टनष्टात्मनां रौरवादिगर्ता अस्मादिति "महागर्तः" यथा "अश्रद्दधानाः पुरुषा धर्मस्यास्य परन्तप । अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ॥" इति ॥ ८१० ॥

( ८११. महाभूतः ) एवं स्वशासनातिलङ्घिनामसुराणां निग्राहकत्वमुक्तम् । अथ दैवीं संपदमभिजातानां स्वशास्त्रवश्यानामनुग्राहकत्वम् । "महाभूतः" महान्तो महात्मानोऽस्य स्वभूता इति । यथा "महात्मानस्तु मां पार्थ" इत्यादि ॥ ८११ ॥

( ८१२. महानिधिः ) ते निधिवदतिप्रिया अस्येति "महानिधिः"। यथा "ये तु धर्म्यामृतमिदम्" इत्यादि ॥ ८१२ ॥

( ८१३. कुमुदः ) कौ प्रकृतिमण्डल एव तैस्सह मोदत इति "कुमुदः" ॥ ८१३ ॥

( ८१४. कुन्दरः ) कुं मुक्तिभुवं ददातीति वा कुन्दकुसुमवद्वैमल्याद्वा कुन्दं परतत्त्वज्ञानम्, पृषोदरादिः, तद्राति ददातीति "कुन्द-

रः" । "आतोऽनुपसर्गे कः" "ददामि बुद्धियोगं तम्" इति ॥८१४॥

( ८१५. कुन्दः ) तेभ्य च "कुन्दः" जितपूर्वपूर्वज्ञान-वैराग्यादिभूमिकेभ्य उत्तरोत्तरां परभक्तिपरज्ञानादिभुवं ददातीति । अथवा कुमिति निपातः ( निपातनान्मान्तत्वम् ) पापार्थो निपातितः, पापं दारयतीति "कुन्दरः" । अपि च विदारितं पापं शोधयतीति "कुन्दः" । "दैप् शोधने" "आतोऽनुपसर्गे कः" इति कः ॥

( ८१६. पर्जन्यः ) "अर्ज अर्जने" "पर्जन्यः" इत्यन्यप्रत्ययः पर्जादेशश्च निपात्यते । स्वतत्त्वज्ञापनेन त्रितापापहः "पर्जन्यः" ॥ ८१६ ॥

( ८१७. पावनः ) तथा पवत इति "पावनः" पवित्रयितेत्यर्थः

( ८१८. अनलः ) तदनुग्रहे प्रेरकनिरपेक्षत्वाद् "अनिलः" । "इल प्रेरणे" प्रेरयतीतीलः "इगुपधात् कः" साऽस्य नास्तीति । यथा "तदप्यप्रार्थितं ध्यातो ददाति मधुसूदनः" इति ॥८१८॥

( ८१९. अमृताशः ) तान् स्वगुणामृतमाशयतीति "अमृताशः" ॥ ८१९ ॥

( ८२० अमृतवपुः ) रूपमप्यमृतमस्येति "अमृतवपुः"

( ८२१. सर्वज्ञः ) तेषां शक्याशक्यसाध्यासाध्यादिकमनुसन्धत्त इति "सर्वज्ञः" ॥ ८२१ ॥

( ८२२. सर्वतोमुखः ) तेषामनेनैव मुखेन सुग्रहो नान्ये-

नेति नियमं निर्धूय येन केनापि व्याजेन सुप्रवेशत्वात् "सर्वतोमुखः" । यथा "आर्तो वा यदि वा दृप्तः परेषां शरणागतः" इत्यादि ॥ ८२२ ॥

( ८२३. सुलभः ) ततः "सुलभः" अनर्घोऽपि मूल्याभावेन स्वीकर्तुं शक्यः, यथाऽङ्गरागदायिनो नैकवक्रा "वस्त्रे प्रगृह्य गोविन्दं मम गेहं व्रजेति वै" इति स्वाधीनं चकार ॥ ८२३ ॥

( ८२४. सुव्रतः ) यथाकथंचित् प्रविष्टानां सर्वथा परिपालनव्रतः "सुव्रतः" यथा "सकृदेव प्रपन्नाय" इत्यादि ॥८२४॥

( ८२५. सिद्धः ) स्वतत्त्वस्थितिविदां "सिद्धः" अयत्नसाध्यः । न ह्यस्य गोप्तृत्वमौपाधिकं सदा स्वत एव सर्वगोप्तृत्वाद् इति साक्षादाविर्भावः ॥ ८२५ ॥

( ८२६. शत्रुजिच्छत्रुतापनः ) अथ व्यवहिताः । तत्र शत्रुजिद्भिः ककुत्स्थपुरुकुत्सादिभिः स्वदिव्यतेजसाऽऽप्यायितैरर्थपरिपन्थिनस्तापयतीति "शत्रुजिच्छत्रुतापनः" । यथा वैष्णवे चतुर्थेऽशे "शतक्रतोर्वृषभरूपधारिणः ककुत्स्थोऽतिरोपसमन्वितो भगवतश्चराचरगुरोरच्युतस्य तेजसाऽऽप्यायितो देवासुरसंग्रामे समस्तानेवासुरान्निजघान" इति, यथा च "पुरुकुत्सो रसातलगतश्चासौ भगवत्तेजसाऽऽप्यायितवीर्यः सकलगन्धर्वान् जघान" इति च ।

( ८२७. न्यग्रोधोदुम्बरः ) न्यग्रोधश्चासावुदुम्बरश्चेति "न्यग्रोधोदुम्बरः" । न्यग्भूतैरधःकृताञ्जलिभी रुध्यते स्वप्रसादी-

न्मुख्येन व्यवस्थाप्यत इति "न्यग्रोधः" यथा "अञ्जलिः परमा मुद्रा क्षिप्रं देवप्रसादिनी" इति 'कृतापराधस्य हि ते नान्यत् पश्याम्यहं क्षमम् । अन्तरणाञ्जलिं बध्वा लक्ष्मणस्य प्रसादनात् ॥" इति च । सर्वगुणोद्गमम्बरं परं धाम तदुपलक्षिता लक्ष्मीपरिजनादयोऽस्येति "उदुम्बरः" । पृषोदरादित्वाद्वर्णव्यत्ययः । अत्युच्छ्रितसेव्योध्वत्यन्तनीचानामभ्युन्नतनसाध्य इत्यर्थः । वैष्णवे 'एवं मौनेयगन्धर्वावधूतैरुरगैरपि । अर्थितो भगवानादिपुरुषः पुरुषोत्तमः ॥" इत्यादौ व्यक्तमेतत् ॥ ८२७ ॥

[ ८२८. अश्वत्थः ] अथ प्रादुर्भावान्तरसंज्ञः । स्वाङ्गभूततत्तद्देवतामुखेन जगान्नयमनम्, तत्राद्य स्थितमपि न श्वः अनित्यमिन्द्रादित्यादिपदं येषां तेषु नियामकतया तिष्ठतीति "अश्वत्थः" पृषोदरादिः । यथा वैष्णवे "मूर्तिं रजोमयीं ब्राह्मीमाश्रित्य सृजति प्रजाः ।आश्रित्य पौरुषीं मूर्तिं सात्त्विकीं यः स पालयन् । कालाख्यां तामसीं मूर्तिमाश्रित्य ग्रसते जगत् ॥" इत्यादि ॥ ८२८ ॥

[ ८२९. चाणूरान्ध्रनिषूदनः ] तद्विरोधिनं चाणूरनामानमसुरान्ध्रमल्लं निषूदितवानिति "चाणूरान्ध्रनिषूदनः" । सुषामादित्वात् षत्वम् ॥ ८२९ ॥

[ ८३० सहस्रार्चिः ] पाचनशोषणप्रतापनप्रकाशनधर्माण्यर्च्चीषि रश्मयः सहस्रमर्चींष्यनेन सूर्ये निषिक्तानीति "सहस्रार्चिः" श्रीपौष्करे "अग्नीषोमात्मसंज्ञस्य देवस्य परमा-

त्मनः । सूर्याचन्द्रमसौ विद्धि साकारौ लोचनेश्वरौ ॥" इति "यदा-दित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥" इति ॥ ८३० ॥

[ ८३१. सप्तजिह्वः ] तथाऽग्निजिह्वा देवाप्यायकाहुतिग्रहणवहनाधिकाराः कालीकरालीप्रमुखाः सप्तास्येति "सप्तजिह्वः" । श्रीपौष्करे "तद्वक्त्रं देवतानां च हुतभुक् परमेश्वरः । मन्त्रपूतं यमादाय हुतमाज्यपुरःसरम् ॥ ब्रह्माण्डभुवनं सर्वं सन्तर्पयति सर्वदा" इति ॥ ८३१ ॥

[ ८३२. सप्तैधाः ] इन्धनानि पाकहविस्सोमसंस्थानि प्रत्येकं सप्तसंख्यानीष्टापूर्तरूपाणि सप्त वानस्पत्यास्समिधोऽस्येति "सप्तैधाः" ॥ ८३२ ॥

[ ८३३. सप्तवाहनः ] तत्प्रकाशकगायत्र्यादिछन्दस्कवैदिकमन्त्राभिमानीनि रविरथधुर्याणि सप्त वाहनान्यस्येति "सप्तवाहनः" । यथाऽऽम्नायते "सप्त प्राणाः प्रभवन्ति" इत्यादि "गुहाशया निहिताः सप्त" इत्युक्तम् । सप्त वायुस्कन्धान् वहतीति वा । श्रीपौष्करे "विरिंचशप्राणशक्तेर्वै वाय्वाख्यमधिदैवतम् । जगत्सन्धारकं चैव नानास्कन्धात्मना तु वै । एते भगवदाधारामास्तिष्ठन्त्यस्मिन् जगत्त्रये ॥" इत्यादि ॥ ८३३ ॥

( ८३४. अमूर्तिः ) अथैवमधिष्ठेयेभ्यः स्वभावविप्रकर्षा ।

"अमूर्तिः" स्थूलभौतिकमूर्तिव्यावृत्त इत्यर्थः ॥ ८३४ ॥

[ ८३५. अनघः ] अकर्मवश्यत्वेन तन्मग्नजीवविलक्षणः "अनघः" ॥ ८३५ ॥

( ८३६. अचिन्त्यः ) मुक्तोपमयापि दुर्निरूपः 'अचिन्त्यः'

[ ८३७. भयकृद् ८३८. भयनाशनः ] स्वशासनातिवर्तिन्यनुवर्तिनि यथासंख्यं "भयकृद्" "भयनाशनः" "भयाभयकरः कृष्णः" इति ॥ ८३७ ॥ ८३८ ॥

( ८३९. अणुः ) अथाणिमाद्यधिष्ठानमतिप्रकृष्टमैश्वर्यम् । अतिसूक्ष्मदहराकाशाव्यक्तजीवानुप्रवेशसामर्थ्याद् "अणुः" । गत्यर्थादणतेः "अणश्च" इत्युप्रत्ययः । तदणिमाप्येतदणुः । "अणोरणीयान्" "निपुणोऽणीयान् बिसोर्णायाः" ॥ ८३९ ॥

[ ८४० बृहत् ] व्याप्त्या विपुलपरमव्योमादि चुलकीकृत्यातिमहता महिम्ना "बृहत्" । "पृषद्बृहन्महत्" इत्यादिना बृहेरतिप्रत्ययः शतृवद्भावश्च निपात्यते । यथा "स भूमिं विश्वतो वृत्वा अत्यतिष्ठद्दशाङ्गुलम्" "महतो महीयान्" "वर्षीयांश्च पृथिव्याः" इत्यादि ॥ ८४० ॥

( ८४१. कृशः ) तूलानिलाद्यतिशायिना लघिम्ना सर्वत्राव्याहतगत्वरः "कृशः" । "कृश तनूकरणे" । इगुपधत्वात् कः ।

कृशिमा चायं लघिमा चेति प्रकरणाद् गम्यते । यथा "अप्रमेयोऽनियोज्यश्च यत्र कामगमो वशी" इति ॥ ८४१ ॥

(८४२. स्थूलः) सर्वमङ्गवदिहैकत्र स्थितस्य स्प्रष्टुं भूमिष्ठस्य च चन्द्रमसं परिमार्ष्टुं शक्तिः प्राप्तिः, तयाऽतिप्रकृष्टया विशिष्टः 'स्थूलः' । "खर्जिपिञ्जादिभ्य ऊरोलचौ" इत्यूलच् । "ध्रुवः समालभ्य तिष्ठति" इति ॥ ८४२ ॥

(८४३. गुणभृत्) स्वसंकल्पेन सर्वं स्वगुणभूतसर्वावस्थं कुर्वन् बिभर्तीति "गुणभृत्" । इदमस्य प्रकृष्टमीशितृत्वम् । "सर्वस्य वशी सर्वस्येशानः" इति ॥ ८४३ ॥

(८४४. निर्गुणः) अतद्वश्यतया तत्संस्पर्शेऽप्यस्पृष्टतद्गुणः "निर्गुणः" परमस्वतन्त्रः । इदमस्य परमं वशित्वम् "विश्वस्य मिषतो वशी" "सत्त्वादयो न सन्तीशे यत्र च प्राकृता गुणाः" इति च ॥ ८४४ ॥

[८४५. महान्] प्राकाम्यमिच्छानभिघातः, भूमावुन्मज्जति निमज्जति च यथोदके, तस्य परमप्रकर्षाद् "महान्" । महतेः "पृषद्बृहद्" इत्यादिना पूर्वनिपातनम् । यथा "संयोजय वियोज्यायं कामकारकरः प्रभुः" "यद्यदिच्छेदयं शौरिस्तत्तत्कुर्यादयत्नतः" इति ॥ ८४५ ॥

(८४६. अधृतः) छायानुप्रवेशेन परचित्तवशीकारः, अनु-

ध्यानेन तच्चित्ताधिष्ठानम्, सजीवस्योत्थितजीवस्य वा शरीरस्यानुप्रवेशनम्, इष्टापूर्ताधिष्ठानं चेति चतुर्विधं यन्त्रकामावसायित्वमाहुः। तादृशवैश्वरूप्यप्रकर्षेण क्वचिद् धृतो नियमितो नेति "अधृतः"। तत्प्रकर्षश्च सर्वदा स्याच्छून्यम्, अतो होति ह स्माहुः असिद्धसमाधयो हि वैदिकपुत्रास्तत्संकल्पादपुनरावृत्तिपरमपदं प्रापुः, अवावर्तेन पुनरावर्तन्ते च, चिदचित्स्वरूपविपर्याससामर्थ्येऽप्यसौ कस्यापि हेतोर्न विपर्यासयतीति ॥ ८४६ ॥

(८४७. स्वधृतः) मन्त्रौषधितपःसमाधिसिद्धाद्वृद्धैश्वर्याद्भगवदैश्वर्यं व्यावर्तयति "स्वधृतः"। एतदैश्वर्यमस्य न समाध्याद्युपाधिकम्, किं तु स्वभावतो धृतमिति स्वधृतः ॥ ८४७ ॥

(८४८. स्वास्यः) अथ मुक्तैश्वर्यात्—"स्वास्यः"। आस्या आसनम्। 'आतश्चोपसर्गे' इत्यङ्। सा शोभनाऽस्येति। मुक्तस्य ह्याविर्भूतस्वाभाविकैश्वर्यरूपमासनं दुष्टं पूर्वमविद्यातिरोहितत्वात्, नैवं भगवतः, सदाविर्भावादिति ॥ ८४८ ॥

(८४९. प्राग्वंशः) अथ नित्यानामैश्वर्यात्—"प्राग्वंशः"। "यत्र पूर्वे" इति श्रुतिः। अनादिमुक्ताः प्राञ्चः, तेषां वंशः समुद्भवभूमिर्नित्यस्वरूपाविर्भावनिबन्धनभूत इति। सर्वं हि सर्वथा तदिच्छोपाधिकमित्यविवादः। सर्वस्यास्य संग्रहो वैष्णवे "तदष्टगुणमैश्वर्यं नाथ स्वाभाविकं परम्। निरस्तातिशयं यस्य ततस्त्वोऽप्यामि किं त्वहम् ॥" इति ॥ ८४९ ॥

( ८५० वंशवर्धनः ) अथ तद्विलक्षणस्य तत्तत्ताद्रूप्य-हेतुत्वात् तत्र 'वंशवर्धनः' वंशमनन्तरोक्तं स्वसन्तानभूतं नित्यवर्ग-सिद्धवर्गं वर्धयतीति । यथा "प्रणतोऽस्म्यनन्तसन्तानम्" इति ॥८५०॥

( ८५१ भारभृत् ) मुक्तानां च बन्धस्रंसनस्वरूपाविर्भा-वस्वप्राप्तिभारं बिभर्तीति "भारभृत्" ॥ ८५१ ॥

( ८५२ कथितः ) तत्र प्रमाणयति "कथितः" उक्त-वक्ष्यमाणगणवत्तया सर्वशास्त्रेषु । यथा "वेदेषु सपुराणेषु साङ्गो-पाङ्गेषु गीयसे" "वेदे रामायणे पुण्ये भारते भरतर्षभ । आदौ मध्ये तथान्ते च विष्णुः सर्वत्र गीयते ॥" "वचसां वाच्यमुत्त-मम्" इत्यादि ॥ ८५२ ॥

( ८५३ योगी ) सर्वमेतत्संभावयतीति "योगी" यु-ज्यतेऽनेनेति योगोऽघटितार्थघटनं महाप्रभावः, सोऽस्यातिशयेन नित्ययोगेन चेति । यथा "पश्य मे योगमैश्वरम्" "योगेश्वरः कृष्णः" "योगं योगेश्वरात् कृष्णात्" "महायोगेश्वरो हरिः" इत्यादि ॥८५३

( ८५४ योगीशः ) बद्धेष्वपि सहजसमाधिकानां सन-कादियोगिनामपि धुर्यः "योगीशः" । "सनन्दनादीनपकल्मषान् मुनींश्चकार भूयोऽतिपवित्रितं पदम्" इति ॥ ८५३ ॥

( ८५५ सर्वकामदः ) योगस्खलितेभ्योऽप्यणिमादिका-मानन्तरायतया ददातीति "सर्वकामदः" । यथा "प्राप्य पुण्य-कृतां लोकानुषित्वा शाश्वतीः समाः" इत्यादि ॥ ८५५ ॥

( ८५६. **आश्रमः** ) ततो निवृत्त्य सुभिक्षपरविषयेषु वैष्णवगेहेषु तेषां विश्रान्तिहेतुः "आश्रमः"। "शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते"" इति ॥ ८५६ ॥

( ८५७. **श्रमणः** ) भोगजन्मभ्यामनुपक्षीणसर्वसंस्कारैस्तत्र समाधिशेषोऽनायासेन श्रम्यतेऽभ्यस्यत इति "श्रमणः"। "युवोरनाकौ" इत्यनः। "तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम्" इति ॥ ८५७ ॥

( ८५८. **क्षामः** ) एवं स्वयोगाभिमुख्यमात्रेण ते योगभ्रष्टा अपि दुर्गं तरितुं क्षमन्तेऽस्मादिति "क्षामः"। घञ्। "न हि कल्याणकृत् कश्चिद्दुर्गतिं तात गच्छति" इति ॥ ८५८ ॥

( ८५९. **सुपर्णः** ) एवं प्रत्यापन्नसमाधीन् समाधिविपाकद्वारा तमसः पारं नयतीति "सुपर्णः"। "स्वपारं भगवान्नयति" इति मौलाः। "अनेकजन्मसंसिद्धस्ततो याति परां गतिम्" ॥ इति ॥ ८५९ ॥

( ८६० **वायुवाहनः** ) तांश्च प्रबलहेतुभिः पतितानपि वायुनाऽनुपमगत्वरेण पतगपतिना वाहयत्युत्तारयतीति "वायुवाहनः"। यथा परमर्षिशापाद्धश्चरं परमभागवतं वसुं गरुत्मता पुनरुपरिचरीचकार। श्रीविष्णुतत्त्वे च "अथवा पक्षिराट् तूर्णमागत्य स्वामिनः पदम्। नेष्यति" इति ॥ ८६० ॥

( ८६१ **धनुर्धरः** ) ईदृगुपासकानां कण्टकोद्धरणाय स्वय-

मेव "धनुर्धरः" । "एतदर्थं हि लोकेऽस्मिन् क्षत्रियैर्धार्यते धनुः" "धार्यते क्षत्रियैश्चापो नार्तशब्दो भवेदिति" इति ॥ ८६१ ॥

( ८६२. धनुर्वेदः ) अन्येऽपि सुरनरेन्द्रादयो धनुरादिकं तत्तच्छास्त्रप्रवर्तकेऽस्मिन् विन्दन्तीति "धनुर्वेदः" ॥ ८६२ ॥

( ८६३. दण्डः ) वेदधर्मक्षेमंकरनृपतिमुखेन दण्डनीत्या दुष्टान् दाम्यतीति "दण्डः । "अमन्ताड्डः" ॥ ८६३ ॥

( ८६४. दमयिता ) स्वयञ्च रावणादींस्ताच्छील्येन "दमयिता" ॥ ८६४ ॥

( ८६५. अदमः ) न चास्यान्यः कश्चिद्दवमिति "अदमः" यथा "भस्म कुर्याज्जगत्सर्वं मनसैव जनार्दनः । न तु कृत्स्नं जगच्छक्तं किञ्चित्कर्तुं जनार्दने" ॥ इति ॥ ८६५ ॥

( ८६६. अपराजितः ) एवं सर्वतोमुखे प्रशासने कचित् कदाचित् कुतश्चिदप्रतिहतः "अपराजितः" । यथा "दाशार्हमपराजितम्" "यस्य "मन्त्री च गोप्ता च सुहृच्चैव जनार्दनः । हरिस्त्रैलोक्यनाथस्सन् किं नु तस्य न निर्जितम् ॥" इति च ८६६

( ८६७. सर्वसहः ) स्वशासनेन सर्वं देवतान्तरमपि मन्दाधिकारिणामाराध्यतया सहते बिभर्तीति "सर्वसहः" ॥८६७॥

( ८६८. नियन्ता ) तत्र तत्तद्रुचीन् प्ररोचयन्नियच्छतीति "नियन्ता" ।"यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति" इति ।

( ८६९. नियमः ) तत्फलं च जात्यायुर्भोगादिकं नियम्य-

तेऽस्मिन्निति "नियमः" । "यमः समुपनिविषु च" इत्यप् । यथा "लभते च ततः कामान् मयैव विहितान् हि तान्" इति ॥८६९॥

( ८७० यमः ) तत्तत्फलनियामकान् यमादीनपि यच्छतीति "यमः" । यथा "प्रभवाति संयमने ममापि विष्णुः" इति । एवं रजस्तमसोर्नियमनम् ॥८७०॥

( ८७१. सत्त्ववान् ) अथ सत्त्वस्य । परमप्रकाशलाघवसुखसंपदा मोक्षमूलं सत्त्वं साक्षादधिष्ठेयमस्येति "सत्त्ववान्" । यथा "महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तकः" इति । द्रुहिणादिमुखे हि रजस्तमसी । श्रीमति वाराहे देवः "सत्त्वेन मुच्यते जन्तुः सत्त्वं नारायणात्मकम् । रजसा सत्त्वयुक्तेन भवेच्छ्रीमान् यशोऽधिकः" ॥ "तच्च पैतामहं वृत्तं सर्वशास्त्रेषु पठ्यते । यद्रजस्तमसोपेत सोऽहं नात्यत्र संशयः ॥" इति ॥ ८७१ ॥

( ८७२. सात्त्विकः ) धर्मज्ञानवैराग्यैश्वर्यरूपफलनियमनेन च सत्त्वमर्हतीति "सात्त्विकः" । 'तदर्हति' इति ठक् ॥८७२॥

( ८७३. सत्यः ) सात्त्विकशास्त्रप्रतिपाद्यतया यथार्थवैभवः "सत्यः" "सत्ये प्रतिष्ठितः कृष्णः सत्यमस्मिन् प्रतिष्ठितम् । सत्तासत्ते च गोविन्दस्तस्मात्सत्यः सतां मतः ॥" इति वा "सत्यः" ॥

[ ८७४. सत्यधर्मपरायणः ] निरुपाधिकसात्त्विकचोदनाधिकारिफलक उत्तमधर्मोऽस्य परायणं परमप्रीणनमिति "सत्यधर्मपरायणः" ॥ ८७४ ॥

[ ८७५. अभिप्रायः ] सत्यधर्मनिष्ठेन निरुपाधिकोऽस्यतयाऽभिप्रेत इति "अभिप्रायः" ॥ ८७५ ॥

[ ८७६. प्रियार्हः ] एवमेदमर्थ्यंज्ञानिनं प्रियमेवार्हतीति "प्रियार्हः"। एकभक्तिषु हि भगवतः स्वत एव प्रावण्यम्, आर्तार्थार्थिजिज्ञासुष्वौदार्यबलात्कारेण, "तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते" "उदाराः सर्व एवैते" इति ॥ ८७६ ॥

[ ८७७. अर्हः ] अनन्यस्पृहाणां तेषामप्ययमेव योग्य इति "अर्हः" "आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम्" इति। ॥ ८७७ ॥

[ ८७८. प्रियकृत् ] अन्यपरानपि भजतस्तच्छन्दानुवर्तनेन प्रियान् करोतीति "प्रियकृत्" "निराशीःकर्मसंयुक्तान् सात्त्वतांश्चाप्यकल्पयम्" इति ॥ ८७८ ॥

[ ८७९. प्रीतिवर्धनः ] अथोत्तरोत्तरगुणाविष्कारेण तां प्रीतिं वर्धयतीति "प्रीतिवर्धनः"। "भजतां प्रीतिपूर्वकम्। ददामि बुद्धियोगं तम्" इति ॥ ८७९ ॥

[ ८८०. विहायसगतिः ] तथा निरूढभक्तिपरकोटिभिर्विहायसं परमव्योमपदमेव गम्यतेऽस्मादिति "विहायसगतिः" स खल्वाह "भुक्त्वा च भोगान् विपुलांस्त्वमन्ते मत्प्रसादतः। ममानुस्मरणं प्राप्य मम लोके निवत्स्यसि"। इति, सूत्रं च "तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च

हार्दानुगृहीतः शताधिकया" इति ॥ ८८० ॥

[ ८८१. ज्योतिः ] तदारोहणनिश्रेण्या अर्चिरादिगतेः प्रथमं पदमर्चिराह "ज्योतिः" द्योत्यतेऽस्मादिति द्युतेरिसन् जादेशश्च । यथा "तेऽर्चिषमभिसंभवन्ति" इति । उपासनप्रसङ्गेन भगवता उपासकातिवहने नियुक्तत्वेनातिवाहिका ह्यर्चिरादयः "अर्चिरादिना तत्प्रथितेः" "आतिवाहिकास्तल्लिङ्गात्" इत्यादौ चिन्तिताः ॥ ८८१ ॥

( ८८२. सुरुचिः ) सूर्योदयाद्रोचत इति रुचिरहः, माऽस्य शोभनेति "सुरुचिः" । 'इगुपधात् कित्" इतीन् कित् "अर्चिषोऽहः" इति ॥ ८८२ ॥

( ८८३. हुतभुग्विभुः ) अमृतपरिणामं हुतं भुञ्जानः सोमो यस्मिन् शुक्लपक्षद्वारा विभुः पूर्णो भवति सः "हुतभुग्विभुः" "अह्न आपूर्यमाणपक्षम्" इति ॥ ८८३ ॥

( ८८४. रविः ) उत्थानकालतयोद्गमनद्वारा रूयते प्रशस्यत इति 'रविः" "आपूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासान्" इति ॥ ८८४ ॥

( ८८५. विरोचनः ) द्वाभ्यामयनगतिभ्यां संवत्सरो रथेनादित्यं विरोचयतीति "विरोचनः" "मासेभ्यः संवत्सरम्" "संवत्सरोऽसावादित्यः" इति ॥ ८८५ ॥

( ८८६. सूर्यः ) वायुः सदा सरत्यस्मादिति "सूर्यः" "रा-

जसुयसूयं" इत्यादिना निपातितः। बहुलवचनादस्येति कृतः प्राप्त- मर्थं व्यभिचरन्तीति कृत्प्रत्ययानां सर्वत्रेष्टार्थत्वं द्रष्टव्यम्। "स वायुलोकम्" इति ॥ ८८६ ॥

( ८८७. सविता ) सूर्यद्वारा वृष्टिसस्यादिकं सूत इति "सविता" "संवत्सरादित्यम्" "वायुमब्दादविशेषविशेषाभ्याम्" इति न्याय्यं व्यवधानम् ॥ ८८७ ॥

( ८८८. रविलोचनः ) रविरश्मिसंक्रान्त्यादिमुखेन च- न्द्रविद्युद्वरुणान् लोचयतीति "रविलोचनः" "आदित्याचन्द्रमसम् चन्द्रमसो विद्युतम्" "स वरुणलोकम्" इति ॥ ८८८ ॥

[ ८८९. अनन्तहुतभुग्भोक्ता ] सप्ततन्तुषु हुतं भु- ङ्क्त इतीन्द्रो हुतभुक्, प्रजा भुनक्ति पालयतीति प्रजापतिर्भोक्ता, तौ महान्तावस्येति "अनन्तहुतभुग्भोक्ता""स इन्द्रलोकं स प्रजापति- लोकम्" इति ॥ ८८९ ॥

( ८९० सुखदः ) अमानवमुखेन सूक्ष्मा सवासनं संसार- मुत्सार्य स्वाप्तिसुखं ददातीति 'सुखदः' "तत् पुरुषोऽमानवः स एतान् ब्रह्म गमयति" इति ॥ ८९२ ॥

[ ८९१ नैकदः ] एकं ददातीत्येकदाः, तद्विरुद्धा नैकदा असंख्येयमालाञ्जनवासःप्रभृतिब्रह्मालङ्कारदायिन्यो मुक्ताभ्युत्था- नविदो दिव्याप्सरसोऽस्येति "नैकदः"। "तं पञ्च शतान्यप्सरस उपधावन्ति शतं मालाहस्ताः शतमञ्जनहस्ताः" इत्यादि कौषीतकि-

नस्समामनन्ति । 'तं ब्रह्मालङ्कारेणालं कुर्वन्ति' इत्यादि च ॥८६१॥

( ८६२. अग्रजः ) एवं प्राप्तवतां मुक्तानामग्रे सह सर्वेश्वर्या श्रिया यथापर्यङ्कविद्यं परमभोग्यो जायत इति "अग्रजः" "स आगच्छति अमितौजसं पर्यङ्कम्" इतिप्रभृति 'उपश्रीरुपबृंहणं तस्मिन् ब्रह्मास्ते, तमित्थंविद् पादेनैवाग्र आरोहति, तं ब्रह्माह कोऽसीति" इतिप्रभृति च "सा या ब्रह्मणि चितिर्या व्यष्टिः तां चितं जयति यां व्यष्टिं व्यश्नुते इति" इत्येवमन्ता हि पर्यङ्कविद्या ॥८६२॥

( ८६३. अनिर्विण्णः ) एवमाश्रितं महता प्रणिधानेन संसारगर्तादुत्तार्यात्मानं प्रापय्य च तमशोच्यं पश्यन् "अनिर्विण्णः" 'कृतकृत्यस्तदा रामो विज्वरः प्रमुमोद ह' इतिवत् ॥ ८६३ ॥

[ ८६४. सदामर्षी ] ततः प्रभृति सर्वकालं तेन कृतप्रतिकृतं मर्षितुं निर्वोढुं शीलमस्येति "सदामर्षी" "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" इत्यादि ॥ ८६४ ॥

( ८६५. लोकाधिष्ठानम् ) "अनुत्तमेपूत्तमेषु लोकेषु" इति श्रुतानां मुक्तभोग्यानां नित्याश्रयो "लोकाधिष्ठानम्" ॥ ८६५ ॥

[ ८६६. अद्भुतः ] तत्र च "अद्भुतः" । "अद्भिभुवो द्भुतच्" सर्वदा सर्वैः सर्वथाऽनुभवेऽप्यपूर्ववदतिविस्मयनीयः ॥८६६॥

[ ८६७. सनात् ] तेषां संभजनात् "सनात्" सनस्सनादिति गणे निपातितः ॥ ८६७ ॥

[ ८६८ सनातनतमः ] एवं "सनातनमः" सना पुराणे

तनपि रूपम्, पुराणतमः पुरापि नवः पुराणः, सदातनत्वेऽपि तदातनवन्नित्यं नूतनभोग्यः ॥ ८९८ ॥

[ ८९९. कपिलः ] किंरूपः ? मध्यस्थनीलतोयदविद्युल्लेखोज्ज्वलवर्णः "कपिलः" ॥ ८९९ ॥

( ९००. कपिरव्ययः ) स्वयमपि तदनुभवसुखनिर्वृतिं पाति पिबतीति वा "कपिरव्ययः" । "इन् सर्वधातुभ्यः" । आतो लोपः ॥

इति श्रीहरितकुलतिलकश्रीवत्साङ्कमिश्रसूनोः, श्रीरङ्गराजदिव्याज्ञालब्धश्रीपराशरभट्टापरनामधेयस्य श्रीरङ्गनाथस्य कृतौ श्रीमद्विष्णुसहस्रनामविवरणे भगवद्गुणदर्पणे नवमं शतकं समाप्तम् ॥

---

## ॥ अथ दशमशतकप्रारम्भः ॥

( ९०१. स्वस्तिदः ) एवं महन्मङ्गलं ददातीति "स्वस्तिदः"

( ९०२. स्वस्तिकृत् ) स्वगुणैः स्वभोगाशिषं करोतीति "स्वस्तिकृत्" ॥ ९०२ ॥

( ९०३. स्वस्ति ) स्वयमेव महन्मङ्गलं "स्वस्ति" । "स्व-

स्ति शिन्ताशिषोः" "सावसेश्शित्" इति क्तिप्रत्ययः। शित्त्वाद् भूभावाभावः ॥ ६०३ ॥

[ ६०४ स्वस्तिभुक् ] सर्वमेतत्स्वस्ति भुनक्ति पालयतीति "स्वस्तिभुक्" ॥ ६०४ ॥

[ ६०५. स्वस्तिदक्षिणः ] अन्यदपि स्वपरिचरणानुरूपं दिव्यशरीरशक्त्यादि स्वस्ति स्वात्मदानदीर्घसत्रे ऋत्विग्भ्यो देया दक्षिणाऽस्येति "स्वस्तिदक्षिणः" ॥ ६०५ ॥

[ ६०६. अरौद्रः ] परमैश्वर्येऽपि गुणशीतलिम्ना 'अरौद्रः'।

[ ६०७. कुण्डली ] यथोचितदिव्यभूषणः "कुण्डली" ॥

[ ६०८. चक्री ] तादृशदिव्यायुधः "चक्री" ॥ ६०८ ॥

( ६०९. विक्रमी ) गाम्भीर्यानुकूलविलासः "विक्रमी" ॥

( ६१० ऊर्जितशासनः ) विरिञ्चिपुरन्दराद्यलङ्घ्याज्ञः "ऊर्जितशासनः" ॥ ६१० ॥

( ६११. शब्दातिगः ) अनन्तजिह्वेनानन्तेनानन्तशाखैराम्नायैस्साक्षात् सरस्वत्या च दुरुदाहरमहिमा "शब्दातिगः" ।६११।

( ६१२. शब्दसहः ) अथ गजेन्द्रमोक्षणम्। अस्पष्टशब्दानां तिरश्चामप्यार्तशब्दमतिभारमिव सहत इति "शब्दसहः"। "भक्तिं तस्यानुचिन्त्य" इति ॥ ६१२ ॥

(६१३. शिशिरः) आर्तशब्दश्रवणानन्तरमतित्वरया गतः "शिशिरः"। "शश प्लुतगतौ" "अजिरशिशिर" इत्यादिना रक्प्रत्ययान्तो निपातितः ॥ "श्रुत्वा चक्रगदाधरः। सान्निध्यं कल्पयामास तस्मिन् सरसि" इति ॥ ६१३ ॥

(६१४. शर्वरीकरः) शृणातेः "कृगॄशृवृञ् चतिभ्यः ष्वरच्" इति ष्वरच्। पित्वान्ङीष्। शर्वरी हिंसा परविदारिणी पञ्चायुधी तदा करेऽस्येति ॥ ६१४ ॥

(६१५. अक्रूरः) गजपरिजिहीर्षया करस्थैरप्यायुधैर्ग्राहमपि झटित्यकृत्तवान् "अक्रूरः" "कृतेश्छः क्रू च" इति रक् क्रूरादेशश्च। यथा "ग्राहग्रस्तं गजेन्द्रं च तं ग्राहं च जलाशयात्। उज्जहाराप्रमेयात्मा तरसा मधुसूदनः ॥" इति ॥ ६१५ ॥

(६१६. पेशलः) संभ्रमादयथायथस्रग्भूपाम्बररमणीयः "पेशलः" ॥ ६१६ ॥

(६१७. दक्षः) क्षिप्रमागन्ता "दक्षः" ॥ ६१७ ॥

(६१८. दक्षिणः) तथाऽऽगत्य धिग् मां दूरगतोऽहं त्वामिति सान्त्वनैर्गजेन्द्रस्यानुकूलः "दक्षिणः"। "दक्ष वृद्धौ" "द्रुदक्षिभ्याम्" इतीनन्। यथा "प्रीतिमान् पुण्डरीकाक्षः शरणागतवत्सलः। भजन्तं गजराजानं मधुरं मधुसूदनः ॥" इत्यादि ॥ ६१८ ॥

[६१९. क्षमिणां वरः] तद्दर्शनेन धृतात्मा "क्षमिणां वरः" "अभवत्तत्र वै देशः" इति ॥ ६१९ ॥

[ ६२०. विद्धत्तमः ] तच्चिकित्सायां "विद्धत्तमः"। "एवमुक्त्वा कुरुश्रेष्ठ गजेन्द्रं मधुसूदनः। स्पर्शयामास हस्तेन" इत्यादि॥

( ६२१ वीतभयः ) तत्समागमतुमुलोपलम्भाद्वीतं भयं गजेन्द्रस्येति "वीतभयः" ॥ ६२१ ॥

[ ६२२. पुण्यश्रवणकीर्तनः] "श्रुतेन हि कुरुश्रेष्ठ स्मृतेन कथितेन वा। गजेन्द्रमोक्षणेनैव सद्यः पापात् प्रमुच्यते ॥" इति "पुण्यश्रवणकीर्तनः" ॥ ६२२ ॥

( ६२३. उत्तारणः ) तौ सरस उत्तारितवान्'उत्तारणः'।

( ६२४. दुष्कृतिहा ) "स्थलस्थं दारयामास ग्राहं चक्रेण माधवः" इति 'दुष्कृतिहा" ॥

( ६२५. पुण्यः ) अनया कीर्त्याऽस्मदादीनपि पुनातीति "पुण्यः" ॥ ६२५ ॥

( ६२६. दुःस्वप्ननाशनः ) क एवम्? "दुस्स्वप्ननाशनः" "ये मां त्वां च सरश्चैव" इत्युपक्रम्य "दुस्स्वप्नो नश्यते तेषाम्" इति "दुस्स्वप्नोपशमायालम्" इति च ॥ ६२६ ॥

( ६२७. वीरहा ) वीरं तद्बाधकं हतवान् "वीरहा" "मोचयामास नागेन्द्रं पाशेभ्यः शरणागतम्" इति ॥ ६२७ ॥

( ६२८. रक्षणः ) तं स्पर्शनपरिरम्भणसान्त्वनादिभी रक्षितवान् "रक्षणः"। 'स्पर्शयामास हस्तेन" इत्यादि ॥ ६२८ ॥

( ६२९. सन्तः ) एवमाश्रितान् संतनोतीति "सन्तः"। "अन्येष्वपि दृश्यते" इति डः। तेषामस्तीति वा "सन्तः"। मत्वर्थीयः। तेभ्य इष्टं दत्तवानितिवा। सनोतेर्निष्ठा। "जनसन" इत्यादिनाऽऽत्वविकल्पः॥ ६२९॥

( ६३०. जीवनः ) स्वहस्तेन हननाद् ग्राहमपि गन्धर्वत्वेन जीवयन् 'जीवनः"। "स हि देवलशापेन हूहूर्गन्धर्वसत्तमः। ग्राहत्वमगमत्कृष्णाद्वधं प्राप्य दिवं गतः॥ इति॥ ६३०॥

( ६३१. पर्यवस्थितः ) वात्सल्याद् गजेन्द्रं परि परितोऽवस्थित इति "पर्यवस्थितः" "प्रीतिमान् पुण्डरीकाक्षः शरणागतवत्सलः" इति॥ ६३१॥

( ६३२. अनन्तरूपः ) ईदृंशि सद्यः संपाद्यान्यनन्तानि रूपाण्यस्येति "अनन्तरूपः"॥ ६३२॥

( ६३३. अनन्तश्रीः ) तेभ्यो देयाः स्वप्राप्तिपर्यन्ता अनन्ताः श्रियोऽप्यस्येति " "अनन्तश्रीः"। "ततो दिव्यवपुर्भूत्वा हस्तिराट् परमं पदम्। जगाम" इति॥ ६३३॥

( ६३४. जितमन्युः ) यः शरणागतगजेन्द्रद्वेषिणे जलक्रीडाय क्रोधः स इदानीं जित इति "जितमन्युः"॥ ६३४॥

( ६३५. भयापहः ) अस्मदादीनामपि स्ववात्सल्येन तादृशानाथत्वभयं वध्यादिस्यार्शसनार्हः "भयापहः"। "आशिषि

सर्वतः रामो जीनः



हनः" इति डः । "भये महति मग्नांश्च त्राति नित्यं जनार्दनः" इति ।

[ ६३६. चतुरश्रः ] यद्यपि स्वमहिमोचितं गर्जते गजाय श्लथाम्बराभरणमालं जगाम, यद्यपि क्षुद्रजलकीटाय चुक्रोध, तथापि "चतुरश्रः" समवेतकारी आश्रितार्थः सम्भ्रमो हि साम्प्रतम् ।६३६।

( ६३७. गभीरात्मा ) अन्येषां चतुर्मुखमुखानामप्रधृष्यगाम्भीर्यः "गभीरात्मा" ॥ ६३७ ॥

( ६३८. विदिशः ) तेषां विनयगद्गदस्तुतिगिरामस्य दूरे विविधा दिशा देशा इति "विदिशः" ॥ ६३८ ॥

( ६३९. व्यादिशः ) तेषामभिमतं तत्तत्पदमतिसृजतीति "व्यादिशः" इगुपधत्वात् कः ॥ ६३९ ॥

( ६४०. दिशः ) न तान् गजेन्द्रवदन्तरङ्गीकरोति, किन्त्वाज्ञापयतीति "दिशः" पूर्ववत् कः "गजेन्द्रमोक्षणं दृष्ट्वा सर्वे सेन्द्रपुरोगमाः । ब्रह्माणमग्रतः कृत्वा देवाः प्राञ्जलयस्तदा ॥ ववन्दिरे महात्मानं प्रभुं नारायणं हरिम् । विस्मयोत्फुल्लनयना प्रजापतिपुरःसराः" ॥ इति "गजेन्द्रग्राहमोक्षी च संसारोत्सारलक्षणः" इति ॥ ६४० ॥

( ६४१ अनादिः ) एवं तिर्यक्ष्वपि भक्तेषु विवशो ब्रह्मादिषु फल्गुफलमेव प्रयच्छति, यस्मात् "अनादिः" तैरन्यपरैर्न स्वामित्वेनादीयत इति ॥ ६४१ ॥

( ६४२. भूर्भुवः ) भवतीति भूः स्वदास्यज्ञानेनात्मलाभवान् तस्य भुवः स्वयमेव भूः पदं भवतीति "भूर्भुवः" "निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः" इति ॥ ६४२ ॥

( ६४३. लक्ष्मीः ) तेषां "लक्ष्मीः" सर्वा संपच्च। "भवद्गतं मे राज्यं च जीवितं च सुखानि च" इति "कृष्णाश्रयाः कृष्णबलाः कृष्णनाथाश्च पाण्डवाः। कृष्णः परायणं तेषां ज्योतिषामिव चन्द्रमाः" ॥ इति च ॥ ६४३ ॥

( ६४४. सुवीरः ) तेषां विनिपातप्रतीकारः "सुवीरः" ॥

( ६४५. रुचिराङ्गदः ) तेभ्यस्स्वं रुचिरमतिमनोहरमनुभवयोग्यमङ्गं ददातीति "रुचिराङ्गदः" यथा "न ते रूपम्" इत्यादि

( ६४६. जननः ) अथ सर्वभगवद्व्यापाराणां प्रयोजनम्। तदनुभवक्षमकरणयुक्तानन्यानपि जनयतीति "जननः" ॥

( ६४७. जनजन्मादिः ) तेषां जनानां जन्मन आदिः निमित्तं प्रयोजनमिति "जनजन्मादिः" यथा "अद्य मे सफलं जन्म" "जन्मन्यविफला सैका या गोविन्दाश्रया कथा। सुजन्मदेहमत्यन्तं तदेवाशेषजन्तुषु। यदेव पुलकोद्भासि विष्णुनामनि कीर्तिते। अद्य जन्म यथार्थं मे" इत्यादि ॥ ६४७ ॥

[ ६४८. भीमः ] एवंविधमहानुग्रहविमुखानां "भीमः" गर्भनरकादिहेतुः। स ह्यनात्मनीनान् हितबुद्ध्या शत्रुवद्भापयते "तानहं द्विषतः" इति ॥ ६४८ ॥

[ ६४९. भीमपराक्रमः ] अन्येष्वपि जगदहितनिरतेषु हिरण्यादिषु "भीमपराक्रमः" भयमप्यनुग्रह एव, यथोन्मादिनो निगळनिग्रहस्तस्य तद्बाध्यानां चानुग्रहः ॥ ६४९ ॥

[ ६५० आधारनिलयः ] धार्मिकतया जगदाधाराः प्रह्लादविभीषणपाण्डवादयः, तेषां निलयः "आधारनिलयः" ते ह्याधाराः, यथा श्रीविष्णुस्मृतौ "वर्णाश्रमाचारपराः सन्तः शास्त्रैकतत्पराः । त्वां धरे धारयिष्यन्ति तेषु त्वद्भारमाहितम्" ॥ इति ॥

[ ६५१ धाता ] स्वयं च धर्माचार्यकेण "धाता" "न मे पार्थास्ति कर्तव्यम्" इत्यादि ॥ ६५१ ॥

[ ६५२. पुष्पहासः ] एवं निष्पादितस्वानुभवशक्तीनां सायमिव पुष्पस्य हासो भोग्यतोल्लासोऽस्येति "पुष्पहासः" ॥

[ ६५३. प्रजागरः ] सस्येष्विव कृषीवलस्तेषु रात्रिंदिवं प्रजागर्तीति "प्रजागरः" "य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः" इति ॥ ६५३ ॥

[ ६५४. ऊर्ध्वगः ] कुतस्तदर्थमनिद्रः ? यत "ऊर्ध्वगः" स्वभावतुङ्गः । यथा "महात्मनां संश्रयमभ्युपेतो नैवावसीदत्यतिदुर्गतोऽपि" इति ॥ ६५४ ॥

[ ६५५. सत्पथाचारः ] तन्महत्त्वफलं सत्पथे स्वाभाविकदास्यमार्गे आचरणं तेषां प्रवर्तनमस्येति "सत्पथाचारः" "अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम्" इत्यादि ॥ ६५५ ॥

( ९५६. प्राणदः ) एवं विषयविषमूर्च्छितनष्टात्मभ्य आत्मोज्जीवनं ददातीति "प्राणदः" ॥ ९५६ ॥

( ९५७. प्रणवः ) प्रणवेनेदृशसंबन्धमुद्बोध्य "मां नमस्कुरु" इति स्वचरणारविन्दयोस्तान् प्रणमयतीति "प्रणव." "प्राणान् सर्वान् परमात्मनि प्रणामयति एतस्मात् प्रणवः" इति ॥ ९५७ ॥

( ९५८. पणः ) एवं तेषां स्वाम्यदास्यव्यतिहारेण व्यवहरतीति "पणः"·"पण व्यवहारे" ॥ ९५८ ॥

( ९५९. प्रमाणम् ) एवं निःसंशयविपर्ययवेदरहस्यपरमार्थप्रत्यायकत्वात् "प्रमाणम्" ॥ ९५९ ॥

( ९६० प्राणनिलयः ) प्राणन्तीति प्राणाः अन्ये हि जीवाः, ते स्वनीड इव शकुन्तास्तस्मिन् लीयन्त इति "प्राणनिलयः" "पुंसि संज्ञायाम्" इत्यादिना घः ॥ ९६० ॥

( ९६१ प्राणधृत् ) तान् मातृवद्धारयति चेति 'प्राणभृत्'

( ९६२. प्राणजीवनः ) ताननपानीयादिभज्जीवयतीति "प्राणजीवनः" ॥ ९६२ ॥

( ९६३. तत्त्वम् ) दधिदुग्धयोरिव दधिसारश्चिदचितोर्यात्रिप्रयोजनाभ्यां सारांशः "तत्त्वम्" यथा "परमार्थमशेषस्य जगतः प्रभवाप्ययम् । शरण्यं शरणं गच्छन् गोविन्दं नावसीदति।"

"एकतो वा जगत्कृत्स्नमेकतो वा जनार्दनः। सारतो जगतः कृत्स्नादतिरिक्तो जनार्दनः॥" इति ॥ ६६३ ॥

( ६६४. तत्त्ववित् ) तथा तत्त्वमात्मनो वेत्तीति "तत्त्ववित्" "त्वमेव त्वां वेत्थ" इति, "स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम" इति ॥ ६६४ ॥

( ६६५. एकात्मा ) सर्वस्य चिदचिद्वर्गस्यायमेक एव शेषी भोक्ताऽभिमानी चेति "एकात्मा" ॥ ६६५ ॥

( ६६६. जन्ममृत्युजरातिगः ) तथापि तदुभयविधर्मात्मा "जन्ममृत्युजरातिगः" ॥ ६६६ ॥

[ ६६७. भूर्भुवःस्वस्तरुः ] भूर्भुवःस्वरुपलक्षितैः पथिपथिकैरिव प्राणिभिरुपजीव्यमानच्छायपत्रफलपारिजातः "भूर्भुवःस्वस्तरुः" "समाश्रिताद् ब्रह्मतरोरनन्तान्निःसंशयः पक्वफलप्रपातः" इति ॥ ६६७ ॥

( ६६८. तारः ) तेषां संसारतारणात् "तारः" ॥ ६६८ ॥

[ ६६९. सविता ] सर्वेषां साक्षाज्जनयिता "सविता" ६६९

[ ६७० प्रपितामहः ] पितामहस्यापि जनकत्वात् "प्रपितामहः" ॥ ६७० ॥

[ ६७१ यज्ञः ] स्वाराधनधर्मसमृद्धिरिक्तानां तदर्थिनां स्वयमेव "यज्ञः" ॥ ६७१ ॥

. (९७२ यज्ञपतिः) स्वयज्ञफलप्रदः "यज्ञपतिः" ॥९७२॥

(९७३. यज्वा) अशक्तानां स्वयमेव यजमानः 'यज्वा' "सुयजोर्ङ्वनिप्" आश्वमेधिके वैष्णवे धर्मे भगवान् "तेषां तु पावनायाहं नित्यमेव युधिष्ठिर । उभे सन्ध्येऽनुतिष्ठामि ह्यस्कन्नं तद् व्रतं मम ॥" इति ॥ ९७३ ॥

(९७४. यज्ञाङ्गः) समर्थानुष्ठितमपि यज्ञान्तरमस्य शेषभूतमिति "यज्ञाङ्गः" ॥ ९७४ ॥

(९७५. यज्ञवाहनः) तेषां शक्तिश्रद्धाधिकारदानेन यज्ञं वाहयतीति "यज्ञवाहनः" ॥ ९७५ ॥

(९७६. यज्ञभृत्) विकलमपि यज्ञं स्वस्मरणपूर्णाहुतिभ्यां पुष्णातीति "यज्ञभृत्" यथा "प्रमादात् कुर्वतां कर्म प्रच्यवत्यध्वरेषु यत् । स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः" इति ॥ ९७६ ॥

(९७७. यज्ञकृत्) जगद्धिताय यज्ञमादौ सृजतीति "यज्ञकृत्" ॥ ९७७ ॥

(९७८. यज्ञी) सर्वयज्ञानां शेषी "यज्ञी" ॥ ९७८ ॥

[९७९. यज्ञभुक्] तान् भुङ्क्ते भुनक्ति चेति "यज्ञभुक्"॥

(९८० यज्ञसाधनः) तेऽस्य ज्ञानद्वारा सिद्ध्युपाया इति "यज्ञसाधनः" ॥ ९८० ॥

( ६८१. यज्ञान्तकृत् ) "सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते" इति यज्ञपर्यवसानं स्वतत्त्वज्ञानं करोतीति "यज्ञान्तकृत्"

( ६८२. यज्ञगुह्यम् ) यन्निरपेक्षोऽपि सापेक्षवद्यज्ञेषु पुरोडाशादिकं भुक्त्वा तृप्यंस्तर्पयति, तद्यज्ञविधिगतिसाधनविंद एव विदन्ति न स्थूलदृश इति "यज्ञगुह्यम्" यथा वेद्युदाहरणे "सर्वे वेदास्सर्ववेद्यास्सर्वे यज्ञाः सर्व इज्यश्च कृष्णः" "विदुः कृष्णं ब्राह्मणास्तत्त्वतो ये तेषां राजन् सर्वयज्ञाः समाप्ताः" "ज्योतींषि शुक्लानि च यानि लोके त्रयो लोका लोकपालास्त्रयी च। त्रयोऽग्नयश्चाहुतयश्च पञ्च सर्वे वेदा देवकीपुत्र एव ॥" इत्यादि ॥ ६८२ ॥

( ६८३. अन्नम् ) एवं निष्पादितभोक्तृशक्तिभिर्भुज्यत इति "अन्नम्" ॥ ६८३ ॥

( ६८४. अन्नादः ) तांश्च तथा भुङ्क्त इति "अन्नादः"। कोऽन्य ईदृश इत्येवकारः, चशब्दस्सर्वमुक्तमेकत्रास्मिन् समुच्चिनोति।

[ ६८५. आत्मयोनिः ] दुग्धेनेव सितावलयमात्मना भोक्तारं मिश्रयतीति "आत्मयोनिः" ॥ ६८५ ॥

( ६८६. स्वयंजातः ) प्रार्थनानिरपेक्षतया जातः "स्वयंजातः" ॥ ६८६ ॥

[ ६८७. वैखानः ] जनित्वा भवदुःखविखननाद् "वैखानः"। विपूर्वात् खनतेः "खनो घ च" इति घञ् विखानः, "तत्र साधु" इत्यण् ॥ ६८७ ॥

( ९८८. **सामगायनः** ) स्वप्राप्तिमधुपानेन हावु हावु हावु इति सामानि गायमानो मुक्तोऽस्यास्तीति "सामगायनः" "ण्युट् च" इति ण्युट् । "एतत्साम गायन्नास्ते" इत्यादि ॥ ९८८ ॥

( ९८९. **देवकीनन्दनः** ) एवंविधो न परावस्थः, किंतु "देवकीनन्दनः" "य एष पृथुदीर्घाक्षः सम्बन्धी ते जनार्दनः" "एष भूतं भविष्यच्च भवच्च भरतर्षभ" इति ॥ ९८९ ॥

( ९९०. **स्रष्टा** ) परावस्थोऽपि स एवेति "स्रष्टा" ॥९९०॥

( ९९१. **क्षितीशः** ) "योऽनन्तरूपोऽखिलविश्वरूपो गर्भेऽपि लोकान् वपुपा बिभर्ति" इति सर्वशक्तत्वेऽप्याश्रितभूयिष्ठत्वाद्भूयिष्ठं भूमेरीशः "क्षितीशः" ॥ ९९१ ॥

[ ९९२. **पापनाशनः** ] अत्र दधिनवनीतस्तैन्यरासक्रीडादिकथामृतेन परेषां "पापनाशनः" अवतारेऽपि वैष्णवानां बाह्याभ्यन्तरशत्रुनाशनः ॥ ९९२ ॥

[ ९९३. **शङ्खभृत्** ] परमैश्वर्यचिन्हदिव्यायुधत्वात् "शङ्खभृत्" स्वाधरविद्रुमसुधया पाञ्चजन्यं पुष्णातीति ॥ ९९३ ॥

[ ९९४. **नन्दकी** ] भगवतापि माममयं नन्दयादिति प्रार्थ्यो नन्दकः । "आशिषि" इति वुन् । सोऽस्य नित्ययोगीति "नन्दकी"

[ ९९५ **चक्री** ] नित्यसुदर्शनः स्वभृत्यसुरप्रतिभटरक्षोऽसुरशोणितकलनापितज्वालाञ्चितं चक्रमपि तथैवेति चक्री" ९९५

[ ९९६. **शार्ङ्गधन्वा** ] शार्ङ्गं च विस्फारितज्याघोष-

शरवर्षनाशिताशेषविद्वेषिशार्ङ्गं स्वसदृशं धनुरस्येति "शार्ङ्गधन्वा"

[ ९९७. गदाधरः ] गदाधिपत्नीं च सर्वतस्समुद्भ्रान्तकल्पान्तानलस्फुलिङ्गिनीं नित्यसंमोदिनीं कौमोदकीं धारयतीति "गदाधरः" ॥ ९९७ ॥

[ ९९८. रथाङ्गपाणिः ] यथोचितं रथाङ्गं च पाणावस्येति "रथाङ्गपाणिः"। चक्रीत्यनेन स्वस्वामिभावसम्बन्ध उक्तः, अत्र सदोद्यतत्वमित्यपुनरुक्तिः ॥ ९९८ ॥

[ ९९९. अक्षोभ्यः ] प्रपन्नाभयदानदार्ढ्यात्स्वमहिम्नापि "अक्षोभ्यः" ॥ ९९९ ॥

( १०००. सर्वप्रहरणायुधः ) स्वनिष्ठानां सर्वानिष्टोन्मूलयितॄण्यसंख्येयान्यमर्यादसामर्थ्यान्यात्मोचितान्यनन्तान्याभरणविकल्पानि सदा सर्वत्र सर्वथा सर्वप्रकारसमाश्रितसंरक्षादीर्घसत्रदीक्षितानि सर्वैश्वर्यधुरन्धराण्यन्यान्यपि दिव्यायुधान्यस्येति "सर्वप्रहरणायुधः" एवमशेषदोषप्रत्यर्थ्युपाधिसंख्याद्यवधिविरोधितुङ्गमङ्गलस्वरूपरूपगुणविभवचेष्टितमनङ्कुशैश्वर्यसौशील्यमापत्सखमर्थिकल्पकं प्रपन्नैकजीवातुं श्रियः पतिं भगवन्तं पुरुषोत्तममाश्रितानामाश्रयैः सर्वसंपत्समुदायः ॥ १००० ॥

इति श्रीहरितकुलतिलकश्रीवत्साङ्कमिश्रसूनोः श्रीरङ्गनाथदिव्याज्ञालब्धश्रीपराशरभट्टापरनामधेयस्य श्रीरङ्गनाथस्य कृतौ श्रीमद्विष्णुसहस्रनामविवरणे भगवद्गुणदर्पणे दशमं शतकं समाप्तम् ॥

---

## ॥ अथ फलश्रुतिश्लोकाः ॥

इतीदं कीर्तनीयस्य केशवस्य महात्मनः ।
नाम्नां सहस्रं दिव्यानामशेषेण प्रकीर्तितम् ॥

अथास्य नामसहस्रस्य गौरवं प्राहयन् शान्तनवः कौन्तेयमाह "इतीदम्" इति । यदेतत्कीर्तनं भगवन्महिम्नि, अद्यप्रभृति भगवान् कीर्तनारम्भमर्हतीत्युक्तं कीर्तनीयस्येति । अत्र कारणं केशवस्य महात्मन इति । नाम्नां प्राकृतपरमपदव्यवहारयोग्यत्वमाह दिव्यानामिति । त्वद्गौरवात्किञ्चिदपि ज्ञातव्यं न ह्यापितमित्याह अशेषेणेति ॥

य इदं शृणुयान्नित्यं यश्चापि परिकीर्तयेत् ।
नाशुभं प्राप्नुयात् किंचित्सोऽमुत्रेह च मानवः ॥

अथाधिकारिफलाङ्गनिर्णयः । य इदं शृणुयादित्यादि । यथाधिकारि श्रवणमननयोः सामान्येनोभयलोकाशुभविरोधित्वं तावत्फलमुक्तम् ॥

वेदान्तगो ब्राह्मणः स्यात्क्षत्रियो विजयी भवेत् ।
वैश्यो धनसमृद्धः स्याच्छूद्रः सुखमवाप्नुयात् ॥

अथ चतुर्णां वर्णविशेषाणामनधिरूढभगवद्धकीनामनाकाङ्क्षितफलविशेषाणां यथायोग्यं फलमाह "वेदान्तग" इति ॥

धर्मार्थी प्राप्नुयाद्धर्ममर्थार्थी चार्थमाप्नुयात् ।
कामानवाप्नुयात्कामी प्रजार्थी प्राप्नुयात्प्रजाम् ॥

अथ वर्णविशेषेण यथाकाममभ्युदयफलमाह धर्मार्थीति ॥

भक्तिमान्यः सदोत्थाय शुचिस्तद्गतमानसः ।
सहस्रं वासुदेवस्य नाम्नामेतत्प्रकीर्तयेत् ॥
यशः प्राप्नोति विपुलं ज्ञातिप्राधान्यमेव च ।
अचलां श्रियमाप्नोति श्रेयः प्राप्नोत्यनुत्तमम् ॥
न भयं क्वचिदाप्नोति वीर्यं तेजश्च विन्दति ।
भवत्यरोगो द्युतिमान् बलरूपगुणान्वितः ॥
रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ।
भयान्मुच्येत भीतस्तु मुच्येतापन्न आपदः ॥

अथ नियमविशेषवज्जपरूपसंकीर्तने भक्तस्य सर्वसमृद्धिमाह–भक्तिमान् य इत्यादिभिश्चतुर्भिः । अनुत्तमं श्रेयो मुक्तिः । अन्येऽभ्युदयविशेषाः ॥

दुर्गाण्यतितरत्याशु पुरुषः पुरुषोत्तमम् ।
स्तुवन्नामसहस्रेण नित्यं भक्तिसमन्वितः ॥

अथ भगवदेकार्थिनोऽनन्यभक्तेरप्रार्थितामप्यनर्थनिवृत्तिमाह दुर्गाणीति ॥

वासुदेवाश्रयो मर्त्यो वासुदेवपरायणः ।
सर्वपापविशुद्धात्मा याति ब्रह्म सनातनम् ॥

न वासुदेवभक्तानामशुभं विद्यते क्वचित् ।
जन्ममृत्युजराव्याधिभयं नैवोपजायते ॥

अथ तेषां तत्प्राप्तिमाह वासुदेवाश्रय इति ॥

इमं स्तवमधीयानः श्रद्धाभक्तिसमन्वितः ।
युज्येतात्मसुखक्षान्तिश्रीधृतिस्मृतिकीर्तिभिः ॥

नियमवतो भक्तस्यानुषङ्गिणीमभ्युदयसिद्धिमाह इमं स्तवमिति । श्रद्धा सगौरवत्वरा । भक्तिर्व्याख्याता । आत्मा चेतनः । भगवति भक्तिमेंइतः सुकृतस्य फलं"गोविन्दभक्त्यभ्यधिकं श्रेयश्चान्यन्न विद्यते" इति ।

न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः ।
भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे ॥

तत्त्वत एते दोषाः स्वभावत एव निवर्तन्त इत्याह न क्रोध इति ।

द्यौः सचन्द्रार्कनक्षत्रा खं दिशो भूर्महोदधिः ।
वासुदेवस्य वीर्येण विधृतानि महात्मनः ॥

नायं फलार्थवादश्शङ्क्यो निर्भाग्यैः कुतार्किकैः, भगवत्प्रभावस्यासंभाव्याभावेनातिवादापवादयोरसंभवादित्यभिप्रयन् तस्य तं प्रभावमाह द्यौस्सचन्द्रेति । विधृतानीति नानालिङ्गानां "नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्" इति नपुंसकलिङ्गशेषता ॥

ससुरासुरगन्धर्वं सयक्षोरगराक्षसम् ।
जगद्वशे वर्ततेदं कृष्णस्य सचराचरम् ॥

सर्वस्य तच्छक्तिविधृतत्वमुक्त्वा तद्वशवर्तित्वमाह ससुरासुरेति। वर्ततेदमित्यार्षी संहिता । अवर्ततेदमिति वा ॥

इन्द्रियाणि मनो बुद्धिः सत्त्वं तेजो बलं धृतिः ।
वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञमेव च ॥

इदं तद्वशवर्तित्वं शरीरात्मभावेन विशिनष्टि इन्द्रियाणीति । वासुदेवात्मकानि तच्छरीराणीत्यर्थः । आहुः शास्त्राणीति शेषः ।

सर्वागमानामाचारः प्रथमं परिकल्पितः ।
आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः ॥

एवं तत्त्वशास्त्रार्थानां तादधीन्यमभिधायानुष्ठानशास्त्रार्थानामपि तादधीन्यं मन्दाधिकारिणां भयमपनेतुमाह सर्वागमानामिति । सर्वागमानां सर्वधर्मप्रमाणानां प्रथमं परिकल्पितः प्रथमप्रतिपाद्यधर्म आचारः शौचादिः, तदङ्गः श्रौतो धर्म इति, तस्याराध्यः फलदः सहायश्चाच्युत इति ॥

ऋषयः पितरो देवा महाभूतानि धातवः ।
जङ्गमाजङ्गमं चेदं जगन्नारायणोद्भवम् ॥

धर्मानुबन्धिनामपि तदुद्भवत्वमाह ऋषय इति । ऋषयो मन्वादयस्तस्य स्मर्तारोऽनुष्ठातारश्च । पितरो देवाश्चाचान्तराराध्याः । महाभूतानि वियदादीनि । धातवस्तत्कार्याणि त्वक्चर्मादीनि । एतानि धर्मफलभोगोपकरणानि । भोक्तृवर्गो जङ्गमाजङ्गमं जगदिति ।

योगज्ञानं तथा सांख्यं विद्याः शिल्पादि कर्म च ।
वेदाः शास्त्राणि विज्ञानमेतत् सर्वं जनार्दनात् ॥

ज्ञानहेतुतामप्याह योगज्ञानमिति । ज्ञानं शास्त्रम्, योगस्य ज्ञानम् । योगो द्विविधः समाधियोगः कर्मयोगश्चेति । संख्यया तत्त्वानामवधारणं सांख्यम् । विद्या व्याकरणाद्यङ्गविद्याः, धनुरायुर्गान्धर्वप्रभृतीनि दृष्टार्थान्युपविद्याः, शिल्पानि, सर्वत्रानुष्ठेयं कर्म, वेदाः प्रधानविद्याः, शास्त्राणि स्मृतीतिहासपुराणानि, सर्वमेतद्वि-

ज्ञानं शास्त्रं जनार्दनादुद्भवतीति शेषः ॥

एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः।
त्रीन् लोकान् व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः ॥

अनया महाविभूतिवैचित्र्या भगवतो महानिर्वाहं दर्शयति एको विष्णुरिति। स्वयमेकः सन्ननेकशोऽसंख्येयतया रूपप्रकारपरिणामप्रयोजनभेदेन पृथक् च स्थितानि महान्ति भूतानि त्रीन् लोकांश्च बद्धमुक्तनित्यान् चेतनान् व्याप्य तेषां नियमशेषित्वादिभिरात्मा भवन् विश्वभुक् सर्वथा परिपालकस्तथाप्यव्ययस्तद्दोषैरपरामृष्टः पुनश्च परविभूत्या महद्भूतमवाङ्मनसगोचरश्च भवन् भुङ्क्ते लीलाभोगरसमनुभवतीति ॥

इमं स्तवं भगवतो विष्णोर्व्यासेन कीर्तितम् ॥
पठेद्य इच्छेत्पुरुषः श्रेयः प्राप्तुं सुखानि च ॥

निःसीमभूमा भगवाँस्तुत्यः, तन्निगरणक्षमज्ञानवाग्विभवो भगवान् व्यासः स्तोता, तदुभयमाङ्गल्यमहिमेदं स्तवरत्नम्, तदपनेयमहादारिद्र्यमिदं जगत् तदधिकारीति पुष्कलमेतत्। यः कश्चिच्चेतनः परावरश्रेयोऽर्थी निर्विशङ्कः सेवतामित्याह इमं स्तवमिति ॥

विश्वेश्वरमजं देवं जगतः प्रभवाप्ययम्।
भजन्ति ये पुष्कराक्षं न ते यान्ति पराभवम् ॥

न ते यान्ति पराभवमिति ॥

इति श्रीमन्महाभारते शतसहस्रसंहितायां वैयासिक्यां प्राक् शान्तिपर्वणि स्थितः संप्रत्यानुशासनिके पर्वणि दानधर्मप्रकरणस्थो भीष्मयुधिष्ठिरसंवादरूप एकोनपञ्चाशदधिकशततमः श्रीविष्णोः सहस्रनामस्तोत्राध्यायः समाप्तः ॥

———

एवं स्वभावत एव समस्तद्वन्द्वप्रतिद्वन्द्विसकलकल्याणगुणाकरं प्रपन्नपारिजातं पुण्डरीकाक्षं लक्ष्मीपतिं भगवन्तं भजमानानां स एव सर्वस्वमिति तत्संपदो वाचामगोचराः, कुतः सांसारिकपरिभवप्रसङ्ग इति पर्यायति विश्वेश्वरमिति । तमिममर्थं शपथेन भावयन् न ते यान्ति पराभवं न ते यान्ति पराभवमित्यावृत्त्या पूरयतीति ॥

अस्माकमत्र च परत्र च सर्वदुःख-
मुन्मूल्य संपदमशेषविधां विधाय ।
श्रीरङ्गराजमहिषी स च वैष्णवानां
कुर्यात् सुखं सह जयेन सदा क्रियास्ताम् ॥

---

इति श्रीहरितकुलतिलकश्रीवत्साङ्कमिश्रसूनोः श्रीरङ्गराजदिव्याज्ञालब्धश्रीपराशरभट्टापरनामधेयस्य श्रीरङ्गनाथस्य कृतौ श्रीमद्विष्णुसहस्रनामविवरणं भगवद्गुणदर्पणाख्यं भाष्यं समाप्तम् ।

॥ श्रीकृष्णार्पणमस्तु ॥

केवल ४६ से २४४ पृष्ट तक छपा—
मुद्रक— [illegible]लाल खत्री, प्रबोध प्रेस, राजमन्दिर, काशी ।